मम्मटविरचित

# काव्यप्रकाश

अनुशीलनसहित

अनुशीलयिता


साहित्याचार्य पं० मधुसूदन शास्त्री, एम० ए०

प्राचीन प्राच्यशाखाप्रमुख का० हि० वि० वि०

वाराणसी


प्रकाशक

ठाकुर प्रसाद एण्ड सन्स बुकसेलर

राजादरवाज़ा श्रा कचौड़ी गली, वाराणसी

फोन नं० ६४६५०

सम्वत् २०२९ ]

# THE KAVYAPRAKASH

OF

# MAMMATA BHATTA

*With the Commentaries Madhusudani*
*and Balakrida*

*By*

**Sahityacharya Pt. Madhusudan Shashtri,** M. A.
Ex-Dean, Faculty of the Oriental Learning, B. H. U.
VARANASI

*The Publisher*

**THAKUR PRASAD & SONS BOOKSELLER**
RAJADARWAJA, BRANCH—KACHAURIGALI
VARANASI
Phone : 64650

1972 ] [ *Price Rs.* ~~10/-~~

## अथ किञ्चित् प्रस्तूयते

**कुर्वे काव्यप्रकाशस्य स्वच्छं यदनुशीलनम्**
**समर्पये तद्विद्वद्भ्यः साधुतायै स्वतुष्टये ।**

इति मधुसूदन्याः प्रारम्भे प्रतिज्ञातम् । तत्र काव्यप्रकाशः काव्यं प्रकाश्यतेऽनेन अस्मिन् वेति विग्रहे करणाधिकरणयोश्च पुंसि संज्ञायां घः प्रायेण इति घप्रत्ययेन निष्पन्नः शब्दः । अत्र काव्यं किमिति प्रश्ने कश्चिदाह मन्मनो मनुते यदेव कव्यं तदेव काव्यम् । यतो हि कुशब्दे कवते इति भुवादीयः । कुङ् शब्दे कौति इत्यदादीयः । कुङ् शब्दे कवति इति तुदादीयो धातुः । एवं त्रिषु धातुषु कस्मादपि तस्माद् "अचो यदि"ति यति प्रत्यये कव्यं वक्तव्यम् । एषु एव कस्मादपि "ओरावश्यके" इति ण्यति प्रत्यये काव्यमवश्यवक्तव्यम् । एवं वक्तव्यत्वार्थकयोः कव्यकाव्ययोः को भेदः ? नास्ति भेदः ।

ननु मंगल ! सहैव कव्यकाव्ये चर्चसि इति तदेतदगुषीः । यतः

कव्यं पितृभ्यो देयमन्नं द्रव्यम्; नायं यागरूढोऽपितु रूढः शब्दः । काव्यं कवित्वं शब्दश्चेद् गुणः; इतरथा कर्म; महान् भेदः ।

अये देव ! जानामि भगवन् जानामि । अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । प्रवृत्तिनिमित्ततस्तु भेदोऽस्त्येव । व्युत्पत्तिनिमित्तं पुनरेकमेव ।

देवः । सचामुचं निश्चप्रचं त्वयावोचि ।
अद्येयं चर्चा पण्डितस्येव । अस्तु । शृणु
बुध्यस्व काव्यशब्दार्थौ बुध्वा निर्णय साम्प्रतम् ।
काव्यशब्दनिरुक्तिं प्राक् वक्ष्ये काव्यार्थकं ततः ॥१॥
कवेरपत्यं काव्यं स्यात् कुर्वादिभ्यो ण्यसूत्रतः ।
कवेः कर्म स्मृतं काव्यं कर्मार्थष्यञ् विधानतः ।
कोतुमावश्यकं काव्यमोरावश्यकके ण्यति ॥२॥

कवेरपत्यं काव्यमिति निरुक्तिस्वीकारे कुर्वादिभ्यो ण्य इति सूत्रतोऽपत्यार्थे विहितेन ण्यप्रत्ययेन निष्पन्नस्य काव्यपदस्यार्थः कवनक्रियाकर्तुः कालिदासादेरपत्यं न पतति कुलं यस्मादिति पुत्रपौत्रादिकं योनिजं काव्यं स्यात्, न तु रघुवंशादिकं पाठ्यं, शाकुन्तलादिकं दृश्यम्, गीतगोविन्दादिकं श्रव्यमयोनिजं काव्यं स्यात् । जन्यत्वं तूभयत्रापि । अतः केवलं जन्यत्वमपहाय योन्ययोनिपदविशेशः कृतः ।

पूर्वमविवक्षितं प्रसिद्धमर्थं बोधयित्वा पश्चात् विवक्षितमप्रसिद्धमर्थं बोधयति यत्, तत्पदं निहतार्थकम्। ततश्च अविवक्षितस्य प्रसिद्धस्य योनिजपुत्रपौत्रादिरूपस्य अपत्यपादोपस्थापितस्य अर्थस्य प्रत्ययेन कृतं यद् व्यवधानं, तेन व्यवधानेन, अपत्यपदवाच्यत्वेन अप्रसिद्धस्य विवक्षितस्य गीतगोविन्दरघुवंशशाकुन्तलादिरूपार्थस्य बोधकत्वरूपनिहतार्थकत्वं दोषः।

अथ कवनक्रिया नाम कविकर्तृका काव्यनिर्माणक्रिया एव। अथ च कविर्नाम कवनक्रिया कर्त्ता काव्यनिर्माता। एवं हि काव्यपदार्थज्ञानाधीनं कविपदार्थज्ञानं, कविपदार्थज्ञानाधीनं काव्यपदार्थज्ञानमिति अन्योन्याश्रयः। तेन हि उभयोरेव ज्ञानासंभवाद् दोषश्च। तदेषा दोषद्वयग्रस्ता प्रथमा निरुक्तिः त्यज्यते।

ननु कवेः कर्म स्मृतं काव्यमिति द्वितीयनिरुक्तौ कवनकर्तृनिष्ठक्रियाजन्यफलाश्रयः शब्दो वा अर्थो वा उभौ वेति मतभेदसिद्धार्थे विहितेन ष्यञा निष्पन्नस्य काव्यपदस्यार्थः कवनकर्त्तरि कालिदासादौ निष्ठया क्रियया निर्माणरूपया जन्यस्य फलस्य समुचितललितसन्निवेशरूपस्य आश्रयः शब्दार्थौ। इति। एवमपि पूर्वोक्तः अन्योन्याश्रयो दोषोऽत्र जागरिष्यति। अन्योन्याश्रयाणि च कार्याणि शास्त्रे न प्रथन्ते इति न्यायादियमपि निरुक्तिस्त्यज्यते।

ननु यथा गोशब्दात् गवे हितं गव्यं, गोर्विकारो गव्यं, गवां समूहो गव्यस्तथा कवेरपत्यं काव्यं, कवेः कर्म काव्यमित्यपि स्यात्तथात्वे च नान्योन्याश्रयो दोष इति चेन्न। अयं कविशब्दो गोशब्दवत् जातिशब्दो नास्ति। किन्तु क्रियाशब्दः। यः काव्यं निर्मिमीते स एव कविः न सर्वः। तन्निर्माणं हि कस्यचिदेव प्रतिभावतः। "कवित्वं दुर्लभं लोके शक्तिस्तत्र सुदुर्लभा" इत्युक्तेः। तथा च स दोषस्तदवस्थ एव।

कौतुं कवितुं वा आवश्यकं काव्यमिति तृतीयनिरुक्तौ काव्यमिति लक्ष्यम्। कौतुमावश्यकमिति लक्षणे विशेषणदलं वर्त्तते किन्तु कौतुमावश्यकं किमितिविशेष्यं नास्तीति लक्षणवाक्यापूर्तिर्दोषः। न च गन्धवती पृथिवीतिवद् व्यवस्थेति वाच्यम्। तत्र तु द्रव्यमनुस्यूतं, नवद्रव्येषु पृथिव्या अन्यतमत्वात्। एवं च गन्धवद् द्रव्यं पृथिवी इति संगतम्।

ननु अत्रापि शब्दार्थौ प्रसिद्धौ। तौ संयोज्य व्यवस्थीयतामिति चेन्न। कुधातुः शब्दनार्थकः अतः कौतुमावश्यकः शब्द एव काव्यमिति स्यात्। तेन हि शब्दरूपाणां श्रव्यकाव्यानां मारीचवध-राघवविजय-गीतगोविन्दादीनामेव ग्रहणं स्यात्। तेष्वेव लक्षणं संगतं स्यादित्यर्थः। अर्थरूपाणां दृश्यकाव्यानां शाकुन्तलदीनां, शब्दार्थोभयरूपाणां पठ्यकाव्यानां पद्यात्मकानां रघुवंशादीनां, गद्यात्मकानां कादम्बरीप्रभृतीनां, तदुभयात्मकानां नलचम्पूप्रभृतीनां च ग्रहणं न स्यात्।

ननु नायं नियमो यच्छब्दस्यैव श्रवणम्; आत्मा वा अरे द्रष्टव्यः श्रोतव्यो

मन्तव्यो निदिध्यासितव्यः इति श्रुतौ शब्दभिन्नस्य द्रव्यरूपस्यार्थस्यात्मनः श्रवणं यथा भवति। यथा च "पश्यत श्रोत्रियस्योक्तिकौशलं" इत्याचार्याभिनवगुप्तोक्तौ दर्शनमुक्तेः शब्दस्य भवति तथा प्रकृतेऽपि संगमनीयमिति चेत्तथाऽस्तु। किन्तु काव्यं ग्राह्यमलंकारात, काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदुत्कर्षहेतवस्त्वलंकाराः। काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते। गात्रे श्वित्रमिव स्त्रीणां काव्ये हेयं तु दूषणम्। काव्यवृत्तेस्तदाश्रयादिति प्राचामुक्तेः दोषाभावगुणालंकारादीनां कोतुमावश्यकेऽर्थशून्ये शब्देऽभावात् काव्यत्वमेव दुर्घटम्। एवं हि तृतीया निरुक्तिरपि परिहरणीयतामेवायाति। इति प्राप्ते ब्रूमः।

सहृदयसमवेतरसभावगुणीभूतव्यंग्यगुणालंकारादोषरीतीनामुत्कर्षबोधोपयिकशब्दार्थयोरिदंप्रथमतया प्रकाश्यमानत्वं काव्यत्वम्। अत एव तादृशशब्दार्थयोरिदंप्रथमतया प्रकाशनकर्तृत्वं कवित्वम्। अत्र केवलस्य विशेष्यदलस्य शब्दार्थयोरिदंप्रथमतया प्रकाश्यमानत्वस्य निवेशे न्यायव्याकरणमीमांसादिष्वतिव्याप्तिः। तत्रापि तयोरिदंप्रथमतया प्रकाश्यमानत्वात्। अतः सहृदयसमवेतरसभावगुणीभूतव्यंग्यगुणालंकारादोषरीतीनामुत्कर्षबोधौपयिकेतिविशेषणदलस्य निवेश आवश्यकः। तत्रापि विशेष्यदलांशशब्दार्थयोरभावे सहृदयसमवेतरसभावगुणालंकारादोषरीतीनामुत्कर्षबोधौपयिकस्य इदंप्रथमतया प्रकाश्यमानत्वस्य लक्षणत्वे चित्रे टंकणे उत्कीर्णे चातिव्याप्तिः। तेष्वपि तद्बोधौपयिकवस्तुनः रेखादेरिदंप्रथमतया प्रकाश्यमानत्वात्। एवं च न काव्यलक्षणे कविज्ञानापेक्षा। न च कविलक्षणे काव्यज्ञानापेक्षा। तेन नात्माश्रयः नान्योन्याश्रयश्च।

उत्कर्षः चारुत्वं श्रेयानिति सिद्धान्तानुरोधः। तेन यथा सत्यपि सर्वस्य करचरणादिमत्वे ज्ञानेच्छादिमत्वे च कस्यचिदेव राजत्वं, कस्यचिदेव मन्त्रित्वं तथा सत्यपि रसादिमत्वे अलंकरणप्राधान्ये इदं शब्दचित्रमिदमर्थचित्रमिति। सत्यपि अलंकारादिमत्वे व्यंग्यप्राधान्ये अयं ध्वनिरिति। सत्यपि ध्वनिमत्वे अयं स रशनोत्कर्षीत्यादौ गुणीभूतव्यंग्यस्य चमत्कारे इदं गुणीभूतव्यंग्यमिति व्यवहारः।

यत्तु रसात्मकं वाक्यं काव्यम्। तत्तु

मुख्या महाकविगिरामलंकृतिभृतामपि
प्रतीयमानच्छायैव भूषा लज्जेव योषिताम्।

इति ध्वनिकारोक्तमननुसृत्यैव तथा चिर; नालंकारप्रजापतिभामहोक्तमपि ;

"न कान्तमपि निर्भूषं विभाति वनिताननम्" इदं

अननुसृत्य च। अलंकृतिभृतां योषितां लज्जा इव प्रतीयमानच्छाया एव भूषा अलंकारो मुख्य इत्येकोक्तिः। कान्तापि मनोहरापि वनिता निर्भूषा अलं-

काररहिता न शोभते इति द्वितीयोक्तिः। इमे द्वे परस्परं समञ्जेयातां ततो ब्रुवातां किमस्ति काव्यलक्षणे कोऽपि माहात्म्यातिशयः। ननु यदि ते ब्रुवातामावयोर्द्वयोस्तत्र स इति चेदपूर्णं तर्हि तल्लक्षणम्।

यत्तु स्वविशिष्टचमत्कारजनकतावच्छेदकार्थप्रतिपादकत्वसंसर्गेण चमंत्कारत्ववत्त्वं काव्यत्वं, तद्धि चमत्कारः रसभावगुणीभूतव्यंग्यगुणालंकारादोषरीतीनां मध्ये किंकृत इति विशुद्धेरभावात्, अतिशयस्यानिरूपणाच्च क्षीणम्। यदि रसादिसर्वकृतश्चमत्कार इष्टः। सोऽपि यौगपद्येन वा अयौगपद्येन वा। आद्यश्चेत्तर्हि, उत्तमोत्तमध्यमाधमकाव्यानां भेदे किं मूलम्। अन्त्यश्चेदस्मन्मतमेव अनुगृहीतम्। नृणां ब्राह्मण उत्कृष्ट इतिवन्निर्धारणे षष्ठी प्रकृते बोध्या।

इत्येवं प्रधानमल्लनिर्वहणन्यायेन राजपण्डितीयकाव्यलक्षणालोचनादन्येषां काव्यलक्षणमालोचितमेवेति न विस्मर्त्तव्यम्।

ननु काव्यस्य विषये साहित्यं साहित्यमिति प्रसिद्धेर्मूलं किमिति चेच्छृणु। सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोरिति हर्युक्तेः द्वन्द्ववृत्तिः सहभावे। प्रधानगुणभावाभ्यां सहभावो द्विधा स्मृत इति च। तत्र सहभावस्य साहित्यस्य प्राधान्ये समाहारो यथा देवाश्च असुराश्चेति एषां समाहारः देवासुरम् ( देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ) इत्यत्र एकवचनम्। सहभावस्याप्राधान्ये सहभावाश्रयव्यक्तिप्राधान्ये साहित्याश्रयवस्तु प्रथमत्वे द्वित्वबहुत्त्वे यथा शब्दार्थौ धवखदिरपलाशाः। तेन शब्दार्थौ इति-द्विवचनं, साहित्ये द्वयोः प्राधान्यात्। प्रत्येकं द्वित्वप्रतीतिर्न। फलतः शब्दसहितः अर्थः, अर्थसहितः शब्दः। तादृशयोर्विषये कविकृताया क्रियाया इदंप्रथमतया प्रकाशनं तत् काव्यम्। एवं च साहित्यं काव्यम्। इति प्रसिद्धम्।

अत एव उच्यते—

शब्दार्थाचित्रं यत्पूर्वं ( प्रथमोल्लासे ) काव्यद्वयमुदाहृतम्।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः॥ इति।

चित्रत्वविशिष्टस्य अर्थस्य प्रधानतया शब्दस्य गुणतया स्थितिरर्थचित्रे न तु शब्दस्याचित्रत्वम्। एवं चित्रत्वविशिष्टस्य शब्दस्य प्रधानतया अर्थस्य गुणतया स्थितिः शब्दचित्रे न तु अर्थस्याचित्रत्वमिति।

शब्दबोध्यो व्यनक्त्यर्थः शब्दोप्यर्थान्तराश्रयः
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ( इति च )

एवं सर्वत्र गुणप्रधानभावतस्तयोः सहभावः साहित्यं, तदेव काव्यनामभाक्।

न तु अर्थनिरपेक्षः शब्दः, शब्दानुपस्थाप्यो वार्थः काव्यम्। एवं च काव्यत्वं शब्दसहितार्थवृत्ति अर्थसहितशब्दवृत्ति न तु प्रत्येकवृत्ति। अत एव काव्यत्वस्य उभयवृत्तित्वादेव काव्यं श्रुतमर्थो न ज्ञातः इति व्यवहारः स्यात्।

प्राप्तौ सत्यां निषेधः। यदि अर्थाभावे अर्थज्ञानस्य प्राप्तिरेव नास्ति तर्हि अथा न ज्ञातः इति कथं कथयेत्। न हि भेर्यादि शब्दश्रवणे कश्चित् कथयति; शब्दः श्रुतः किन्तु अर्थो न ज्ञात इति यतस्तत्रार्थस्य प्राप्तिरसंभवैव।

श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेरिति तु अर्थान्तरविजृम्भितम्। श्लोको यशसि पद्ये च इति कोषानुसारं श्लोकः पद्यम्। अथ च श्लोके षष्ठं गुरु ज्ञेयमिति कालिदासोक्तिदिशा अनुष्टुब्जातीयाक्षरैर्घटितं छन्दः श्लोकः। एवं च यत्किंचित् श्लोकवाक्यं गुणालंकारादिरहितं पद्यवाक्यं कथं काव्यं स्यात् न स्यादेवेत्यर्थः। यथा

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्
समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः।

इत्यादिकं श्लोकवाक्यं कः काव्यं कथयिष्यति। इयं तु कारिका। सा कारिका याल्पवृत्तौ बह्वर्थस्य सूचनी इति हैमात्। न तु काव्यम्।

काव्यत्वं व्यासज्यवृत्ति इति तु अभिप्रायान्तरानुरोधेन। अत्र योजनारूपस्य काव्यत्वे, योजनानां च क्रमजन्मनां मध्ये मध्ययोजनायां भवन्त्यां पूर्वस्या ध्वंसे, मध्यमायाः सत्वे उत्तरस्याः करिष्यामाणत्वे समूहस्याभावे व्यासज्य-वृत्तिधर्मप्रकारकनिश्चयसम्बन्धिनो यावदाश्रयविषयकत्वनियमस्य उल्लंघनमभि-प्रायः। बुद्धिप्रकल्पिताभेदेन तासां योजनानां समूहसद्भावे तु भवति काव्यत्वं व्यासज्यवत्ति।

ननु उभयगतत्वे काव्यद्वयमिति चेन्न विजानीयैकचमत्कृतिजनकत्वेन एक-त्वस्यैव व्यवहारात्, सहकारित्वं तु उभयत्रापि उभयोरिति प्रागुक्तमेव बहुशः। एवम्विधे काव्ये शृङ्गारादय नव एव रसाः। नान्ये वात्सल्यादयः। भक्तिरपि भाव एव न रसः। तथाहि—

बहुभिर्बहुधोल्लेखान्मनो निर्णेतुमीहते
भक्तिस्तत्र रसो वा स्याद् भावा वेति प्रवाहुकम्।
केषां तु मान्यतां धृत्वा विचारः प्रचलिष्यति
तां प्राक् प्रदर्शये, पश्चाद् युक्तिं, सिद्धान्तमन्ततः।

समीक्षन्तां तावत्संहृदयशिरोमणयो रसिकाः। भक्ति र्भावो रसो वा वेति। नकिः शृङ्गारादय एव रसा भक्तिर्न रसः इति, भक्तिरेव रसः शृंगारादयो न रसा इति समस्ति राज्ञामाज्ञा वेदस्य वा। किन्तु रसालंकारादिसरणिव्यव-स्थापकानां यो हि समयः स स्वर्णमयः। अन्यथाभूतस्तु स आमयः। रसालंकरा-दिस्वरूपावधारयितार आभरतानन्दवर्धनाभिनवगुप्तम्। आप्पयदीक्षितपण्डित-राजजगन्नाथम्। आशाङ्र्गदेवमधुसूदनम् चिरन्तना मध्यमा अर्वाचीनाश्च मननशीलाः चिन्तका महान्त आचार्याः यद् गेरन् तदेव सत्यं शिवं सुन्दरम्।

इमे हि प्रथमे विद्वांसः रसमधिकृत्य चर्चनार्चनकारका वारकाश्च परिपन्थिनाम्। नह्यस्मिन्नलंकारशास्त्रे रसादि-विभावादि-शब्दसंकेतग्राहकं प्रमाणान्तरमस्ति ऋते एतेषां वचनेभ्यः। नह्यस्यैव रसालंकारशास्त्रस्येयं कथा अपि तु सर्वेषां शास्त्राणामियमेव स्वस्वसिद्धान्तविषये दशा। अन्यथा सकल विपर्यासापत्तेः।

यदि तु समादृतप्राचीनाचार्यसंकेतसेतुं निर्भिद्य स्वरुचिरमणोया सरणिः कैश्चिदाद्रियेत तदि आयंहलमेव स्यात्।

माकीं वाच्यं लक्षणनिर्माणे पुरुषः स्वतन्त्रः। पुराणमित्येव न साधु सर्वम्। नैव प्रमाणीकुर्महे वयं मृषा मुकुलितलोचनान् प्राचो रसालंकाराधिकारिण इति। एवं हि विशुद्धा प्रभुता स्यात्। सहृदयता न स्यात्। अन्यदुच्छृंखलं सत्वमन्यच्छास्त्रनियंत्रितम्। सदाचारस्य शास्त्रस्य च नियंत्रणस्वोकारे एवार्यमर्यादाऽऽदर्या स्यात्। अन्यथा प्रभुताऽपि सनुतर्भूयात्। सकलञ्च विकलं स्यात्। प्रतिशास्त्रसमयानुसारिणां वृद्धानां व्यवहारपरम्परया प्राप्ताः शब्दा ऋधक्। यथा चोक्तं भरतमुनिना।

गोत्रकुलाचारोत्पन्नानि आप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति तथैवैषां रसानां भावानां च काव्यनाट्याश्रितानां चार्थानामाचारोत्पन्नानि आप्तोपदेशसिद्धानि नामानि इति च।

तत्र अष्टौ भावाः स्थायिनः। त्रयस्त्रिंशद् व्यभिचारिणः। अष्टौ सात्विका इति भेदाः। एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः। एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते। इति। एवमेते स्थायिनो भावा रससंज्ञाः प्रत्यवगन्तव्याः। इति।

एवं नव रसा दृष्टा नाट्यज्ञैर्लक्षणान्विता। इति। एवमेते रसा ज्ञेया नव लक्षणलक्षिता। इति च। नवमः शान्तो रसः। तत्र निर्वेदः स्थायी। यदुक्तमभिनवभारत्यां तत्र शान्तस्य स्थायी "विस्मयशमा" इति शमः कैश्चित्पठितः उत्साह एवास्य स्थायीत्यन्ये। जुगुप्सेति केचित्। सर्व इत्येके। तत्वज्ञानजो निर्वेदोऽस्य स्थायी। एतदर्थमेवोभयधर्मोपजीवित्वख्यापनाय अमंगलभूतोऽप्यसौ पूर्वं निर्दिष्टो व्यभिचारिषु। इति। अन्यत्रापि स्थायिसञ्चारिणोर्मध्ये च एतदर्थमेवाऽयं पाठः। अन्यथा माङ्गलिको मुनिस्तथा न पठेदिति च।

स्थायी स्याद् विषयेष्वेव तत्वज्ञानोद्भवो यदि। इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ। इति। तथा स्थायिनो निर्दिश्य व्यभिचारिणां निरूपणावसरे प्राप्ते अमंगलमपि निर्वेदमेव पूर्वमुवादेति मध्यस्थस्यास्य पूर्वान्वयः परान्वयश्चेति देहलीदीपकन्यायेन उभयत्रानुषङ्गतः स्थायिताव्यभिचारिते अत्र निर्वेदे वर्त्तेते। इत्यत एकोनपंचाशद्भावाः। न न्यूना नातिरिक्ताश्चेति।

ध्वन्यालोके—

श्रृंगारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। इति।

रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः। इति।

ननु येषां रसानां परस्परविरोधो यथा—वीरश्रृंगारयोः, श्रृंगारहास्ययोः, रौद्रश्रृंगारयोः। वीराद्भुतयोः। वीररौद्रयोः। रौद्रकरुणयोः। श्रृंगाराद्भुतयोः। श्रृंगारबीभत्सयोः। वीरभयानकयोः। शान्तरौद्रयोः। शान्तश्रृंगारयोर्वेति। एवं विरोधप्रदर्शनावसरेऽपि श्रृंगारहास्य करुण रौद्र वीर भयानक बीभत्साद्भुत शान्ताख्या एव नव रसाः कीर्तिताः न न्यूना नातिरिक्ताश्च इति न भक्तिरसः। प्रत्युत भक्तेः शान्तरसरूपतायां पर्यवसानं स्पष्टीकृतम्। तथाहि—भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातन इत्यस्मिन् वाक्ये व्यंग्यत्वेनायमेवार्थो विवक्षितो यदत्र महाभारते पाण्डवादिचरितं कीर्त्यते तत्सर्वमवसानविरसमविद्याप्रपञ्चरूपञ्च। परमार्थं सत्यवस्तु भगवान् वासुदेवोऽत्र कीर्त्यते। तस्मात्तस्मिन्नेव भगवति भवत भावितचेतसः। मा भूत विभूतिषु निःसारासु रागिणः। गुणेषु वा प्रतिनिविष्टधियः। इति।

अग्रे च—अनेन चार्थेन संसारातीते तत्वान्तरे भक्त्यतिशयं प्रवर्त्तयता सकल एव सांसारिको व्यवहारः पूर्वपक्षीकृतो न्यक्षेण प्रकाशते। इति।

वासुदेवसंज्ञाभिधेयत्वेन च अपरिमितशक्त्यास्पदं परं ब्रह्म गीतादि प्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धि। रामायणादिषु चानया संज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात्। तदेवमनुक्रमणोनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्य अनित्यतां प्रकाशयता मोक्षलक्षण एवैकः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्यांगित्वेन विवक्षित इति सुप्रतिपादितम्। ध्व० च० ५ का०

इति दिशा, वासुदेवसंज्ञाभिधेये भक्त्यतिशयं प्रवर्त्तयतेति वाक्येन, शान्तो रसो महाभारतस्यांगित्वेन विवक्षित इत्युक्त्या च शान्त एव भक्तेः पर्यवसानं सूचितम्।

भक्तिश्चात्र शान्ते रसे विभावः। तदुक्तमन्यत्र—

भक्ता भक्तिनिमग्नाश्च शंकरस्य हरेरपि।

तथा भक्तिप्रभावाश्च विभावा यत्र सम्मताः। इति।

अभिनव भारत्यामाचार्या अभिनव गुप्ताश्च—एवमेते नवैव रसा पुमर्थोपयोगित्वेन रंजनाधिक्येन वा इयतामेवोद्देश्यत्वात्। इति

अत एव ईश्वर प्रणिधान विषये भक्तिश्रद्धे स्मृतिमतिधृत्युत्साहाद्यनुप्रविष्टे अस्यैव शान्तस्यैव अंगमिति न तयोः पृथक् रसत्वेन गणनम्। इति।

आर्द्रता स्थायिकः स्नेहो रस इति त्वसत्। स्नेहोऽभिषंगः। स च सर्वो

रत्युत्साहादावेव पर्यवस्यति। एषैव च गन्धस्थायिकस्य लौल्यरसस्य प्रत्याख्याने सरणिर्मन्तव्या। एवं भक्तावपि वाच्यमिति च।

संगीतरत्नाकरे च—

भक्तिं स्नेहं तथा लौल्यं केचित् त्रीन् मन्वते रसान्।
श्रद्धार्द्रताभिलाषांश्च स्थायिनस्तेषु तद्विदुः।
तदसत्, रतिभेदौ हि भक्तिस्नेहौ नृगोचरौ।
व्यभिचारित्वमनयोर्नार्योः स्थायिनौ तु तौ।
अयुक्तविषया तृष्णा लौल्यं तद्धास्यकारणम्।
अतो रसा नवैवेति मुनिना संप्रधारितम्।

रसतरंगिण्यां च—

ननु वात्सल्यं लौल्यं भक्तिः कार्पण्यं वा कथं न रसः। आर्द्रताभिलाषश्रद्धास्पृहाणां स्थायिभावानां सत्वादिति चेन्न। तेषां व्यभिचारिरत्यात्मकत्वात्। वात्सल्यं करुणः। लौल्यं हास्यः। भक्तिः शान्तः। कार्पण्यमपि हास्य एवेति। काव्यप्रकाशे च

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्तः। इति।

साहित्यदर्पणे च

सर्वाकारमहंकाररहितत्वं व्रजन्ति चेत्। अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा। अत्र शान्ते। आदिशब्दाद् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः। इति। रसगंगाधरे च—

कथमेत एव रसाः भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपन्हवात्। भगवत्यनुरागः स्थायिभावः। न चासौ शान्तरसेऽन्तर्भावमर्हति। अनुरागस्य विरुद्धत्वात्। उच्यते—भक्तेर्देवादिविषयरतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः। रतिर्देवादिविषयेति हि प्राचां सिद्धान्तात्। न च तर्हि कामिनीविषयाया अपि रतेर्भावत्वमस्तु रतित्वाविशेषात्। अस्तु वा भगवदनुरागस्यैव स्थायित्वम्। कामिन्यादिरतीनां च भावत्वं विनिगमनाविरहात्। इति वाच्यम्। नाट्यशास्त्राग्निपुराणविष्णुधर्मोत्तरोपपुराणप्रणेतृभिः प्रोक्तानां वचनानामेवात्र रसभावादिव्यवस्थापकत्वेन स्वातन्त्र्यायोगात्। अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात्। न स्याद्वा शुद्धभावत्वं जुगुप्साशोकादीनाम्। इत्यखिलदर्शनव्याकुली स्यात्। रसानां नवत्वगणना च मुनिवचननियन्त्रिता भज्येतेति यथाशास्त्रमेव न्यायः। इति।

एवं रसप्रस्थानाधिकारिणां मतेन भक्ते रसत्वं नायाति। अथो भक्तेरसत्वे युक्तयः प्रसार्यन्ते।

तत्र पूर्वं भक्तिशब्दार्थः समीक्ष्यते। यतोऽत्र अविवेचितसम्प्लवो जागर्त्ति। अतः भक्तिशब्दस्वरूपं विवेच्यते। सामान्यतः व्युत्पन्नमव्युत्पन्न-मिति द्विधा शब्दस्वरूपमामनन्ति शाब्दिकाः। ते हि शब्दप्रत्यपि प्रभवन्ति किमुत सुस्पष्टे तस्मिन्। तत्र व्युत्पत्तिपक्षे भज विश्राणने १ भञ्जो आमर्दने २ भज सेवायाम् ३ इति त्रिभ्यो धातुभ्यो भावादौ क्तिनि सति भक्तिशब्दः स्वरूपं लभते। एषु धातुषु विश्राणनार्थकभज धातुनिष्पन्नभक्तिशब्दस्यार्थः आत्मनो निवेदनं विश्राणनं देवाय। निवेदने क्रमः श्रवणं प्रथमं, ततः कीर्त्तनम्, स्मरणम्, पादसंवाहनम्, अर्चनम्, वन्दनम्, दास्यम्, सख्यम् पर्यन्ते आत्मनिवेदनम्। एवम्भूता भक्तिर्न रसः विभावादिभिरप्रतीतत्वात्। विभावादिप्रत्याय्यो रस इत्यभिमानः।

आमर्दनार्थकभञ्जो धातोः क्तिनि, अनिदितामिति नलोपे सति निष्पन्नस्य भक्तिशब्दस्यार्थः सीमा। सा च ग्रामनगरजनपदप्रान्तराष्ट्राणां विवादशमनार्थ-मवधारितान्तभागः। तथा च पाणिनिमहर्षेः सूत्रम् "भक्तिः" तदुदाहरणञ्च स्रुघ्नः अंगदेशः इदानीं पूरणियाख्यः भक्तिः सीमाऽस्यं तत्स्रौघ्नं पाटलिपुत्रम्। एवमेव—

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः"

अत्र कर्मणा सिद्धिं मुक्तिं विन्दति लभते। एतद् दृष्टं श्रुतञ्च। तद्यथा कर्मणैव हि संसिद्धिमास्थिता जनकादयः। काश्यां मरणान्मुक्तिः (मरणं क्रियैव) इत्यादि कर्मणा मुक्तिरिति सिद्धान्तः।

ऋते ज्ञानान्न मुक्तिः। नान्यः पन्था विद्यतेऽयनाय इत्यादिषु ज्ञानान्मु-क्तिरिति सिद्धान्तः।

इत्यनयोः सिद्धान्तयोर्विवादशमनाय कर्मज्ञानयोरन्तराला भक्तिः तयोः सीमा इत्यर्थः। यथा सीमायां ग्रामनगरजनपदप्रान्तराष्ट्रनिवासिनामुभयेषां समा-नोऽधिकारस्तथा ज्ञानकर्मसंगिनोरुभयोः भक्तौ समानोऽधिकारः। क्वचित् ज्ञानं प्रधानं कर्म गौणं यथा शुकादिषु। क्वचित् कर्म प्रधानं ज्ञानं गौणम् यथा जनका-दिषु। अस्ति तु उभयत्र उभयं न एकं केवलम्। इति। एवम्भूता भक्तिर्न रसः। विभावादिभिरनिष्पन्नत्वात्।

सेवार्थकभज धातुनिष्पन्नभक्तिशब्दार्थः सेवा। तदुक्तम्—

भज इत्येष वै धातुः सेवायां परिकीर्तितः।
तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसीति।

तत्र सेवा नाम आश्रयणम्। उपभोगः। आराधनम्। उपासना वा। तेषु आश्रयणं सेवा इति चेत्—

"मद्भक्तियोगेन भजत्यथो माम्"
११।१४।२५ इति भागवतोक्तिः
"माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते ।"
इति १३।१० गीतोक्तिश्चासमञ्जसायते ।

भक्त्या आश्रयेण भजति आश्रयते । भक्त्या सेवते सेवया सेवति इत्यात्माश्रयः । एवम्भूता भक्तिर्न रसः । अथ भक्तिः सेवा उपभोगः । एवं हि विष्णुं भजति सेवते उपभुंक्ते इति स्यात्तत्त न युक्तम् । विष्णोरुपभोगः सेव्यस्य सेवकेन उपभोगः सुखानुभूतिः क्रियाविशेषः । स न शोभते । सा न रसः तथात्वात् । अथ भक्तिः सेवा आराधनमिति चेत्तर्हि

वर्णाश्रमवता राजन् ! पुरुषेण परः पुमान् ।
हरिराराध्यते भक्त्या नान्यत्तत्तोषकारणम् ।

इत्यत्र भक्त्या आराधनेन आराध्यते इत्येवमात्माश्रयः । एवम्भूता भक्तिर्न रसः तथात्वात् ।

अथ भक्तिः सेवा उपासना । सा च द्विविधा प्रतीकोपासना १ अहंग्रहोपासना २ च । तयोः प्रतीकोपासना साकारस्यैव । अहंग्रहोपासना निराकारस्यैव । साकारस्य प्रतीकोपासनापि बहिरंगा अन्तरङ्गा चेति द्विविधा । तयोः बहिरंगा साकारस्य प्रतीकोपासनैव मूर्तिपूजा । मूर्तौ पूजेति सप्तमीसमासः । साकारस्य बहिरङ्गप्रतीकोपासनायाः स्वरूपञ्च अतस्मिन् ध्येयभिन्ने काष्ठपाषाणधातुमृदादिघट्टिते मनुष्यतुल्यशरीरोपलक्षितश्रीरामादिमूर्त्तिविशेषे शास्त्रप्रमाणजन्या ध्येयबुद्धिः सर्वभूतेषु तिष्ठतः, सर्वभूताश्रयस्य, विनश्यत्सु अविनश्यतः, विभक्तेषु अविभक्तस्य, अविभक्तेषु विभक्तस्येव स्थितस्य, अनेकेषु एकस्य अतीन्द्रियस्य जगदीश्वरस्य ज्ञानम् । इयं हि प्रतीकोपासता । प्रतीकश्च अवयवः । यथा पितुरंगुलीरूपावयवग्राही बालः अवयविपितृग्राहिणमात्मानं मनुते । यथा गुरोः पादोपसंग्राही पादोपस्पर्शी गुरूपसंग्राहिणं गुरूपस्पर्शिनमात्मानं शिष्योऽवधारयति । यथा विशालाया गंगाया एकदेशस्नायी अपि पुमान् आत्मानं गंगास्नायिनं भावयति तथैव सर्वव्यापकं परमेश्वरं व्याप्यभूते अनीश्वरे तत्रापि मूर्च्छितारूयमूर्तिरूपे एकदेशे षोडशोपचारैः पूजयन् अतएव इयमधमाधमा । यथोक्तम्—

उत्तमो ब्रह्मसद्भावो ध्यानभावस्तु मध्यमः ।
स्तुतिर्जपोऽधमो भावो बाह्यपूजाधमाधमेति ॥

अहंग्रहोपासना च "सोऽहमस्मि" "अहं ब्रह्मास्मि" ब्रह्मवित् ब्रह्मैव भवतीत्यादि रूपा । एवम्भूता भक्तिर्न रसः । विभावादिरूपसामग्र्यैव रसात्मकचर्वणायाः सम्भवत्वात् ।

अथ भज्यते सेव्यते भगवदाकारमन्तः करणं क्रियतेऽनया सा भक्तिरिति

चेत्सापि रसो न। एतया करणव्युत्पत्या श्रवणकीर्त्तिनादिसाधनस्यैवाभिधानात् विभावादेरनभिधानाच्च।

अथ भजनमन्तः करणस्य भगवदाकारतानयनं भक्तिरिति चेत्तदपि रसो न। एनया भावव्युत्पत्या निष्पन्नभक्तिशब्दार्थः भजनं क्रियारूपमेव। एवं हि "न कर्मणा न प्रजया धनेन, त्यागेनैकेऽमृतत्वमानशु,,रिति श्रुतिविरोधः स्यात् अत्र कर्म क्रिया एव। एवं च श्रुतिर्हि कर्मरूपाया अर्थात् क्रियारूपाया भक्त्या ब्रह्मभूयाय कल्पनमवरुन्धे। नन्वस्तु एवं श्रुतिः परं तद्विरुद्धं स्मृतिः पुराणञ्च सह्रादददाते यद् भक्त्या ब्रह्मप्राप्तिरिति। तद्यथा—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते इति गीतासु १४।२६
"भक्तिरेकैव मुक्तिदा" इति भा० मा० २।११
अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्। इति भा० २।३।१०।
"भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे" इति भा० १०।६९।४५।
"मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। इति भा० १०।८२

निश्चिता त्वयि भक्तिर्या सैव मुक्तिरिति। मुक्ता एव हि भक्तास्ते इति च स्कान्दे रेवाखण्डे। ४५

वासुदेवे भगवति भक्तियोगः प्रयोजितः
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्। इति भा० ३।३२।२३।

इति चेत्। श्रुतिस्मृत्योर्विरोधे हि श्रुतिरेव गरीयसीति निर्णयाद्भक्तिः क्रियास्वरूपा नास्ति भक्तेस्तथात्वे तया स्मृतिपुराणाभ्यामुद्घोषितं ब्रह्मदर्शनं न स्यात्। अन्यच्च भक्तिर्न क्रियास्वरूपा। आत्मन आन्तरिक प्रयत्नासाध्यत्वात्। यो यः क्रियास्वभाववान् स स आत्मनः आन्तरिकप्रयत्नजन्यतावान्। यथा भोजनम्, आत्मन आन्तरिकप्रयत्नजन्यतावद्। अथवा यद्यन्न आन्तरिक प्रयत्नजन्यं तत्तन्न क्रियास्वरूपम्। यथा ज्ञानम्। ज्ञानवद् भक्तिरपि नान्तरिकप्रयत्नजन्याऽतो न क्रियास्वरूपा। इति अन्वयव्यतिरेकोपवृंहितेनानुमानेन भक्तेः क्रियात्वाभावप्रसिद्धेः।

युक्तिरपि एनमर्थमनुगृह्णाति—यथा कश्चिदपि स्वप्रतिकूलपदार्थान् वीक्षितुं नेच्छति अत एव तदर्थं प्रयततेऽपि न। परन्तु तैः सह इन्द्रियसन्निकर्षे सति तेषां प्रत्यक्षत्वं भवत्येव। एवमेव मातापितृभ्रातृगुरुप्रभृतिषु प्रेमातनोतुं न प्रयतते परं पूर्वजन्मसंस्कारवशात् स्वत एव तेषु तदुदेति। अन्यच्च भक्तिर्यदिक्रियास्वभावा स्यात्तर्हि फलस्याऽनन्त्याभावः प्रसज्येत। "तद्यथेह कर्मचितो

लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः क्रियाजन्यफलस्यानन्त्याभावबोधनात्। एवंरूपा भक्तिर्नरसः। तथात्वात्।

ननु "अहमस्य अहमस्याः" "अयं मम इयं मम" इत्यकारकं ज्ञानमेव भक्तिरिति चेन्न। "इति मत्वा भजन्ते माम्" "भजन्त्यनन्यमनसो ज्ञात्वा "ज्ञानवान् मां प्रपद्यते" इत्यादिषु सर्वत्र भक्तिः कार्यं ज्ञानं कारणमिति न ज्ञानरूपा भक्तिः। "भक्तिर्ज्ञानाय कल्पते" इत्यत्रापि ज्ञानं जनयितुं भक्तिः समर्था भवति इत्येवं भक्तिज्ञानयोः कार्यकारणभाव एव न तु ज्ञानस्वरूपता भक्तेः। ननु "अयं मम इयं मम भवतु। अहमस्य अहमस्याः भवेयमिति इच्छैव भक्तिरिति चेन्न। इच्छाहि अप्राप्तवस्तुविषयिणी भवति। तत्र प्रतीद्यं येषु येषु भक्तिस्ते ईश्वरः, गुरुः पिता माता इत्यादयस्तु पूर्वत एव प्राप्ता इति नेच्छारूपा भक्तिः। ननु-भगवत्कर्मणां भगवद्धर्माणां वा अनुष्ठानादहमपि कृतार्थो भवेयमिति भगवत्कर्मसु भगवद्धर्मेषु वा रुचिविशेषरूपा श्रद्धैव भक्तिरित्यपि न, श्रद्धावान् भजते यो माम्" इति श्रद्धावतो भजनमित्युक्तेः तयोः कार्यकारणभावाभ्युपगमः। अथ च श्रद्धारतिर्भक्तिरनुक्रमिष्यतीति भागवतानुसारं श्रद्धातो रतिस्ततो भक्तिरिति श्रद्धारतिभक्तीनामनुक्रमदर्शनात् ( रुचिविशेषः श्रद्धा। दृढप्रत्ययो विश्वासः। अयं सर्वः सगन्धेषु विश्वसतीति सम्बन्धिष्वेव दृढप्रत्ययदर्शनात्। श्रद्धायास्तु मान्येष्वेव दर्शनात्) अन्यच्च एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे। वासुदेवे भगवति यया संलते रतिमिति ७।७।३१ भागवतोक्तेः रतिजनकत्वमपि भक्तेः। अत एवं प्रीतिरपि भक्तिर्न, "भजतां प्रीतिपूर्वकम्" इत्येवं प्रीतेर्हेतुत्वस्मरणात्। एवं नहि भोः। "यया संलभते रतिम्" इत्यनेन "भक्त्या सञ्जातया भक्तया बिभ्रत्युत्पुलकां तनुम्—११।३।३१। इत्यनेन च भक्तिरेका साधनभूता श्रवणकीर्तनादिरूपा अन्या साध्यभूता फलरूपा च। अतएव शाण्डिल्यसूत्रे सा परा अनुरक्तिरीश्वरे" इत्यत्र परेति शब्द उपात्तः। अथ च तद् व्याख्यास्वपि उपास्याकाराकारिता चित्तवृत्तिरूपा परिपक्वनिदिध्यासनाख्या श्रवणमननाभ्यासानां फलभूता भक्तिरिति चेन्न। तयोर्भक्त्योः कार्यकारणभाव स्वीकारे आत्माश्रयप्रसंगः। व्यक्तिभेद स्वीकारे अन्योन्याश्रयो वा चक्रकप्रासो वा। ततोऽधिककल्पने अनवस्था स्यात्।

ननु "याथात्म्यज्ञानभूतो यः सुदृढः सर्वतोऽधिकः
स्नेहो भक्तिरिति प्रोक्त इत्युक्तेः।

कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते। इत्युक्तेश्च स्नेह एव भक्तिरिति चेन्न।

कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः। ६।१।२९ इति।
गोप्यः कामाद् भयात् कंसो द्वेषाच् चैद्यादयो नृपाः।

सम्बन्धाद् वृष्णयः, स्नेहाद् यूयं, भक्त्या वयं विभो। ६।१।३० इति भागवतानुसारं कामादिस्नेहान्तेषु पञ्चम्यन्तपदालोचनात्तयोः भक्तिस्नेहयोः कार्यकारण भाव एव। अन्यच्च भक्तिस्नेहयोरेकत्वं यदि स्यात्तर्हि स्नेहाद् यूयमिति भक्त्या वयमिति युष्यदस्मदोः सम्बन्धेन स्नेहभक्त्योः पृथक् पृथगुपादानं किमर्थम्। अतो नास्ति भक्तेः स्नेहरूपत्वम्। इत्येवं भक्तेः स्वरूप निर्णय एव यर्हि दुःशकस्तर्हि तस्या रसरूपत्वं साम्प्रतमसाम्प्रतमेव। इति एवं युक्तिभिर्भक्तिर्न रसः।

येषांचित्ते वसेद् भक्तिः सर्वदा प्रेम रूपिणी।

इति भागवते महाभागवतस्य नारदस्योक्तेः सर्वविधदेशकालपात्रवयोऽवस्थापदाद्यनिबन्धना ममायमस्याहमित्याकारा भावपदाभिधेया देवादिविषया केवलमुपासकनिष्ठा प्रेमरूपा रत्यपरपर्याया चित्तवृत्तिर्भक्तिः।

नायकनायिकादिनिष्ठा रतिस्तु देशकालादिनिबन्धना। यतो यूनोरेव। न तु बालयोः, नापि च अंगं गलितं पलितं मुण्डमिति दशापन्नयोर्वृद्धयोः। वृद्धावस्थायां शृङ्गारात्मतापन्नरतेरत्यन्तासंभवात्, बालकेष्वपि तादृशरतेरंकुरस्यैव असत्वात्। सापि एकान्त एव न तु सर्वसमक्षम्। भक्तिस्तु बालकेषु ध्रुवप्रह्लादादिषु। युवसु शुकशौनकनारदादिषु। वृद्धेषु व्यासभीष्मपितामहादिषु सर्वेषु देशकालेषु सर्वसमक्षं चानुभूयमानत्वात्। अतएव "व्यक्ता शृंगारःकान्ताविषया तु"। "देवादिविषया भाव." इत्युक्तम्।

देवादिविषयाया उपासकनिष्ठायास्तादृश्याश्चित्तवृत्तेः गुरुमातापित्राद्युपास्यादिविषयभेदेन वात्सल्यं सौहार्दं सख्यं (एककार्यकरः सखेत्युक्तेः) सौभ्रात्र मैत्रीत्यादि नामतः स्वरूपतो व्यवहारतश्च भिन्नत्वम्।

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते।

न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः। इत्यत्र प्रकृतिरारम्भस्तस्यां वर्त्तमानः प्राकृतः साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठानः इत्येवमल्पतारूपस्य परिच्छेदस्य निरूपणात् परिच्छिन्ना भक्तिः। रसस्तु अपरिच्छिन्नः। ये लौकिकं रसं प्राकृतं भक्तिमलौकिकं रसमप्रकृतं मन्वते ते पश्यन्तु।

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।

भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥ इत्युत्तमत्वरूपस्य—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च

प्रेममैत्रीकृपोपेक्षां यः करोति स मध्यमः इति मध्यमत्वरूपस्य

चातिशयस्य वर्त्तमानत्वात्सातिशयापि भक्तिः। रसस्तु निरतिशयः। अन्यच्च यत्र रसस्तत्र रतिः सूक्ष्मरूपेण नायकनायिकयोर्हृदि सर्वदा वर्त्तमानत्वाद्वासना रूपा भवति। अतएव स्थायिनी उभयनिष्ठा च। भक्तिस्तु न तथा न स्थायिनी

केवलमेक निष्ठा। ईश्वरे अन्तःकरणस्याभावात् जीवेष्विव कयापि क्रियया अन्तःकरणवृत्तिः प्रेमाख्या रतिर्नोत्पद्यते कुतो वासनारूपत्वं तस्याः। माया वृत्तिविशेषरूपा सा यदि स्वीक्रियेत तद्यपि "असङ्गो ह्ययं पुरुषः" इति पुरुषस्यासङ्गत्वनिरूपणात् आध्यासिकी बलान्नियोजिता इति च पुंश्चली न स्थायित्वमर्हति अतएव गोपीभिरार्त्तं प्रणद्यते "भक्ता भजस्व। दुरवग्रह! मा त्यजास्मान्" इति।

अतो भक्तिर्न रसः। विभावादिजनितचर्वणात्मकास्वादलभ्यसुखरूपाभावात्।

रसशास्त्रसिद्धान्तोऽपि निगमय्य परीक्ष्यतामार्यमिश्रैः। स हि सिद्धान्तेः विभावादिभिः संभोगाच्चिदानन्दविशिष्टस्थायी रसः इति। अथवा विभावादिभिः संयात् स्थाय्युपहितचिदात्मन. स्वरूपेण प्रकाशनं सः।

तत्र प्राक् भक्तिः का क्रिया वा ज्ञानं वा इच्छा वा श्रद्धा वा स्नेहो वा प्रीतिर्वा रतिर्वा इति निश्चयो नास्ति विभिन्नैराचार्यैर्विभिन्नतया तस्या निरूपणात्। पुनस्तत्र स्थायी कः। विभावादिरूपकाव्यार्थभावनामारभ्य भावनातो जायमानानन्दानुभूतिं यावदनुभवगम्यत्वमेवैषां रत्यादीनां स्थिरत्वं नाम स्थायित्वम्। अत एवोच्यते आप्रबन्धं स्थिरत्वादमीषां भावानां स्थायित्वमिति। अतो भक्तेः स्वरूपानिर्णये स्थायित्वाज्ञाने किमात्मकत्वं रसत्वं कस्य रसत्वमिति सर्वमपहस्तितमेव।

काव्ये नाटये विभावादिसंयोगाद्रसनिष्पतिरिति सिद्धान्तस्तत्र काव्यार्थभावना वा अभिनयदर्शनं वा नियतम्। तेन उचितगीतातोद्यचर्वणाविस्मृत सांसारिकभावनया निर्विघ्नसंवेदनात्मकविश्रान्ति लक्षणं रसनापरपर्यायव्यापारेण गृह्यमाणत्वात् रसशब्देनाभिधीयते।

भक्तिविषये तु नायं नियमः। यथाचार्याणां निर्देशः उपदेशो वा।

द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते।

भगवद् धर्माणां भगवत्सम्बन्धिकर्मणां वा अनुष्ठानाद् द्रुतस्य मनसो धारावाहिकतां गता वृत्तिर्भक्तिरित्यत्र काव्यस्याभिनयस्य च नामापि न श्रूयते स्मर्यते च। तस्माद्भक्तिर्न रसः। अन्यच्च मनसो भगवदाकारावृत्तिर्भक्तिरिति स्वीकारे सविकल्पकज्ञानविषयत्वं तस्याः स्यात्। रसस्य तु स्वसंवेदनसिद्धानन्दमयत्वान्न सविकल्पकज्ञानविषयत्वम्।

यच्चोच्यते

भगवान् परमानन्दस्वरूपः स्वयमेव हि
मनोगतस्तदाकाररसतामेति पुष्कलम्।

मनसि व्यक्तीभवद्भगवदाकारतारूपरसाख्यः स्थायीभावः परमानन्द साक्षात्कारात्मकः प्रादुर्भवति स एव रसः। सर्वान्तर्यामी सर्वेश्वर भगवान् स्वयमेव भक्तिरसालम्बनविभावः। तदपि न सम्यक् यतः स्थायिभावालम्बन-विभावयोरेकत्वम्। परन्तु ईशजीवयोरिव विम्बप्रतिबिम्बयोरिव नामतो व्यवहारतः स्वरूपतश्च तयोर्भिन्नत्वमेव। अतोऽपि भक्ते रसत्वं न। ननु भोः! विम्बमेव प्रतिविम्बतेऽन्यत्र। इति बिम्बप्रतिविम्बयोरभेदः कल्प्यते। ममैवांशो जीवलोके जीवभूतः सनातनः इति। जीवो ब्रह्मैव नापर इति दर्शनात्। सर्वत्राभेददर्शनाच्चेति सूत्रतोपि जीवेशयोः अभेदः कल्प्यते इति चेत्। सत्यम्। किन्तु रतिकाले वरस्त्रीणां भूषणादिमूल्यचिन्तनवत् एतदभेदकल्पनमानन्दानुभूतौ साधकं स्यात् उत बाधकं स्यात्। यदि साधकं ब्रूते नमोऽस्तु भवते। भवद्बुद्धेः परत एव रसः। यदि बाधकं स्याद्विघ्नः स्यात्तर्हि कथं रसः। सर्वथा वीतविघ्नया रसनात्मकप्रतीत्या ग्राह्यो भाव एव रसः। अलौकिकनिर्विघ्नसम्वेदनात्मकचर्वणागोचरतां नीतोऽर्थः चर्व्यमाणतैकसारः न तु चर्वणाकालातिरिक्तकालावलम्बी स्थायिविलक्षण एव रसः। तत्तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावत्वालम्बनात्। अलौकिक एवायं चर्वणोपयोगी विभावादि व्यवहारः। न च सा चर्वणा प्राङ् मानान्तरात् जाता-येनाधुना सा स्मृतिः स्यात्। अलौकिकविभावादि संयोगबलोपनीतैवेयं चर्वणा। अतस्तदभावात् कथमास्वाद्यते रसः।

## अथ भक्तिविषये सिद्धान्तः।

नैष्कर्म्यमपि अच्युतभाववर्जितम्। भागवते १।५।१२।

नैष्कर्म्यमपि ज्ञानमपि। अच्युतो भावः अचला भक्तिस्तद्वर्जितं तद्रहितं न शोभते इति तट्टीका। अत्र भावो भक्तिरिति पर्यायौ।

एतावानेव यजतामिह निःश्रेयसोदयः
भगवत्यचलो भावो यद्भागवतसंगतः।

इह लोके यजतां जनानाम्। एतावानेव निश्रेयसोदयः। यद् भागवतानां परमभक्तानां संगतः संसर्गाद् भगवति परमेश्वरे अचलो भावः भक्तिरिति तट्टीका। अत्रापि भक्तिः भावः पर्यायौ।

भक्तियोगो वहुविधो मार्गैर्भामिनि! भाव्यते
स्वभावगुणमार्गेण पुंसां भावो हि भिद्यते।

स्वभावगुणमार्गेण पुंसां भावो भिद्यते अनन्तो भवति अत एव हे भामिनि! मार्गैर्हेतुभिः भक्तियोगो वहुविधो भाव्यते। इत्यनेनापि भक्तिभावयो पर्यायत्वम्।

एवं विस्मृय सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम्

भावयोगं भक्तियोगमित्यर्थ इति तट्टीका। अत्रापि भक्तिभावयोः पर्यायत्वम्

श्रीलिङ्गादिष्वपि—"स्वरनेत्राङ्गविक्रिया" इत्यत्र अनुभावानामनुक्रान्तत्वात् तेषां च भावानामंगभावदंगी भाव एव भक्तिरित्यवगम्यते। इति व्याख्यानम्। अत्रापि भाव एव भक्तिरिति।

इतोऽपि भक्तिर्न रसः। रसो वै सः। रसं लब्ध्वा आनन्दी भवति। यं लब्ध्वातु परं लाभं मन्यते नाधिकं ततः। इत्यादि श्रुतिभिः रसलाभ एव परलाभः। रसे विश्रान्तिः ततः परमवाप्तव्यं नावशिष्यते। परन्तु भक्तेरनन्तरं ब्रह्मसाक्षात्कारोऽवशिष्यते। यथोच्यते—

वासुदेवे भगवति भक्तियोगः प्रयोजितः
जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम्।
योगास्त्रयो मया प्रोक्ताः नृणां श्रेयो विधित्सया
ज्ञानं कर्म च भक्तिश्च नान्योपायोऽस्ति कुत्रचिद्
येन केनाप्युपायेन मनः कृष्णे निवेशयेत्

हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम्। एवं हि भक्तिरुपायो ब्रह्मदर्शनस्य, न तूपेयस्वरूपा। रसस्तु उपेयः। ततश्च भक्तिर्न रसः। अतो देवादिविषया रतिर्भाव एव न तु रस इत्येवसिद्धान्तो मान्यः। इति।

ननु रतिरनुभूतेऽर्थे भवति। अननुभूते भगवति कथं रतिरित्येवं वादिनामुपरि "सत्यं ज्ञानमनन्तं ब्रह्म" "यतो वा इमानि भूतानि" "मनसा तु विशुद्धेन मनसाभिक्लृप्त इत्यादिश्रुत्यनुशीलिभिः सर्वैरेव पातनीयो दण्डः।

सदेव सौम्यदमग्र आसीदित्यादिशास्त्रानुसारिभिः "शास्त्रयोनित्वात्" इति सूत्रयद्भिः व्यासादिभिश्च बोधनीया वादिनः। इति।

तत्र भवन्तो भवन्त आचार्या विनेयाविद्योपसका भावकाश्च क्षाम्यन्तुतमां मां वृद्धं प्रारूप (प्रूफ) संशोधने महामहतामपि किमुत स्वल्पानां दूषणानामनिरासात् विशोध्य पठन्तु।

मधुसूदन शास्त्री
भदैनी
वाराणसी

अधिक वैशाख
शुक्ल १५

## काव्यप्रकाश क्या है

शिक्ष विद्योपादाने धातु से शिक्षणं शिक्षा इस विग्रह में गुरोश्च हलः इस सूत्र से स्त्रीलिंग में अप्रत्यय होने पर शिक्षा शब्द बनता है। वैदिक काल में तो शिक्षा का शी दीर्घ मिलता है जैसा कि लिखा है अथातः शीक्षां व्याख्यास्यामः। इस शब्द का अर्थ है विद्या का उपादान ग्रहण। तदनुसार शिक्षते विद्या का उपादान करता है सीखता है इस अर्थ में कर्त्ता में ण्वुल् करने पर शिक्षक बनता है उसका अर्थ है विद्याग्रहण करने वाला सीखने वाला विद्यार्थी। इसी में जब प्रेरणा अर्थ को जोड़ देते हैं तब भी शिक्षयति इस विग्रह में शिक्षक बनता है उसका अर्थ सीखाता है विद्या ग्रहण कराने वाला अध्यापक होता है। इस तरह इसमें प्रेरणा अर्थ छिपा रहता है यही अन्तर्भावित ण्यर्थ कहाता है और भी जैसे पठति पढ़ता है इस अर्थ में भी ण्वुल् करने पर पाठक बनता है और पाठयति पढ़ाता है इस अर्थ में भी पाठक बनता है। एक ही व्यक्ति में एक स्वरूप वाले इन शब्दों का भिन्न २ अर्थों में प्रयोग उनकी विभिन्न क्रियाओं के कारण होता है। उसी तरह "काव्यप्रकाश" इस शब्द का प्रयोग काव्यशास्त्र के ग्रन्थ के अर्थ में और साहित्यशास्त्र के ग्रन्थ के अर्थ में तथा अलंकार शास्त्र के ग्रन्थ के अर्थ में होता रहा है और हो रहा है। इसी लिए शब्दप्रधान किन्तु अर्थ जिनमें गुण है ऐसे गीतगोविन्दादि श्रव्य काव्यों, अर्थ प्रधान किन्तु शब्द गुण है जिनमें है ऐसे अभिज्ञानशाकुन्तल

[जैसे मनसा दीव्यति इस विग्रह में कर्म में अण् और करण में तृतीया दोनों एक साथ होते हैं जिससे मनसादेवः यह प्रयोग सिद्ध होता है और जैसे शिवस्य भगवत इदं तथा देव्या भगवत्या इदं इस विग्रह में षष्ठी समास और अण् दोनों एकसाथ होते हैं जिससे शिवभागवतम् और देवीभागवतम् प्रयोग सिद्ध होते हैं उसी तरह अभिज्ञानेन गृह्यते शकुन्तला यत्र इस विग्रह में अर्थात् जहां अभिज्ञान से अंगूठीरूप चिन्ह से शकुन्तला समझी जाती है और ग्रहण की जाती है इस अर्थ में समास और अण् प्रत्यय दोनों एक साथ होते हैं और अभिज्ञानशाकुन्तलम् प्रयोग सिद्ध होता है

अभिज्ञान शाकुन्तलमधिकृत्य कृतं नाटकम् इस अर्थ में अभिज्ञानशाकुन्तलम्। यह पद साधु है। इसके समर्थन के लिए देखिये यह

तत्त्वबोधिनीकार का दिवः कर्म च सूत्र की व्यख्या में लेख है। "मनसा दीव्यति" इति मनसादेव इत्यत्र युगपत् कर्मणि अण् करणे गृतोया च

सिध्यति। मनसः संज्ञायामिति तृतीयाया अलुक्। यह अत्यावश्यक प्रासङ्गिक चर्चा है ]

प्रभृति नाटकादि दश रूपक एवं डोम्बी श्रीगदितादि सप्तविध उपरूपक दृश्य काव्यों तथा शब्दार्थोभय सहित रघुवंशादि पद्यात्मक, कादम्बार्यादि गद्यात्मक एवं नलचम्पूप्रभृति गद्यपद्योभय स्वरूप पठय काव्यों का अथच काव्यप्रकाश साहित्य दर्पण एवं रसगंगाधर आदि ग्रन्थों का अध्ययन करके उपात्तविद्य को अंग वंग एवं कलिङ्ग (उत्कल) प्रान्तों में काव्यतीर्थ की, बिहार उत्तरप्रदेश मध्यप्रदेश एवं राजस्थान में साहित्याचार्य की और मद्रासादि प्रान्तों में साहित्यशिरोमणि की उपाधि दी जाती है अत एव इन लोगों को अमुक काव्यतीर्थ है अमुक साहित्यचार्य है तथा अमुक साहित्य शिरोमणि है ऐसा कहते हैं तथा इन्हीं लोगों को यत्र तत्र सर्वत्र यहाँ वहाँ सभी प्रदेशों में आलंकारिक कहते हैं। और इन लोगों के शिक्षणीय अध्येतव्य विषय को काव्यशास्त्र साहित्यशास्त्र एवं अलंकारशास्त्र कहते हैं। जैसे (काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्) काव्यशास्त्र के द्वारा मन को बहला कर धीमानों चिन्तको मनीषियों का समय उपयोग में आता है। साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त। [यहाँ साहित्य में दर्पणत्व का आरोप किया है। तदनुसार मुखचन्द्र पद के चन्द्राभिन्नमुख रूप अर्थ की तरह साहित्यदर्पण पद का भी दर्पणाभिन्न साहित्य अर्थ है। किन्तु दर्पण को देखने से कहाँ और किस को अर्थ समझ में आता है हाँ दर्पण प्रतिबिम्बित मुख को देख कर तिलकादि शिरोभूषणादि की योजना मुख में हो सकती है। उसी तरह दर्पण ग्रन्थ में प्रतिपादित साहित्य को देखकर सभी लोग साहित्यतत्त्व को सुख से जान लेते हैं। और भी जैसे—अलंकारान् सर्वानपि गलितगर्वान् रचयतु। यह हमारा बनाया रसगंगाधर ग्रन्थ सभी आलंकारिकों के अलंकार शास्त्र के जानकार लोगों के गर्व को गलित करे। यहाँ अलंकारान् शब्द का अर्थ लक्षणया आलंकारिक है क्योंकि गर्व चेतन का ही धर्म है न कि उपमादि अलंकारों का और न अलंकार प्रतिपादक ग्रन्थों का धर्म हो सकता है। इस का मूल है—

प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात्।
अन्यथा व्यवधानं स्यादनुज्ञानाधिकैरपि ॥

जनप्रवृत्ति लोकव्यवहार। क्योंकि व्यवहार शक्तिग्राहक प्रमाणों में मूर्धन्य है अतः उस से नियमन होता है। इसी से सर्व साधारण लोक की सामान्य प्रत्यासत्ति हो जाती है और वृद्धों का आप्तों का अनुग्रह हो जाता है इसलिए आप्त वाक्य शब्द को प्रमाणों में माना है। वह आप्त वाक्य है भामह का 'शब्दार्थौ सहितौ काव्यम्' और मम्मट का कविनिर्मितिमादधती भारती सदा जयति। भारती की कृपा से कवि श्रव्य दृश्य पठय सभी काव्यों का निर्माण

करता है यहाँ शब्दार्थौं में शब्दश्च अर्थश्च यह द्वन्द्व समास है। यह द्वन्द्व समास वहाँ होता है जहाँ सहभाव की साहित्य की विवक्षा होती है। जैसा कि कहा है "सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोः" भर्तृहरि वाक्यपदीय में। इसके सिवाय यह सहभाव साहित्य प्रधानभाव एवं गुणभाव से दो प्रकार का होता है। जैसा कि कहा है "प्रधानगुणभावाभ्यां सहभावो द्विधा मतः।" जहाँ सहभाव प्रधान होता है वहाँ समाहार द्वन्द्व होता है। और एक वचन होता है जैसे—देवासुरम्। देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा इत्यादि। जहाँ सहभाव अप्रधान होता है और साहित्य सहभाव जिन में रहता है वे आश्रयी भूत पदार्थ प्रधान होते हैं वहाँ पदार्थों के अनुसार द्विवचन एवं बहुवचन होता है जैसे शब्दार्थौं धवखदिरपलाशाः। इस में शब्दार्थौं का अर्थ होता है अर्थ के सहित शब्द। इससे "धीर समीरे यमुनातीरे वसति वने वनमाली" इस श्रव्य काव्य का संग्रह हो गया। यह गीतगोविन्द काव्य का एक अंश है। इस में गुर्जरी राग है और एकताला ताल है। ये मारीचवध राघवविजय एवं गीतगोविन्द श्रव्य काव्य हैं। मारीच वध में केवल ककुभराग है। राघव विजय में केवल ठक्क राग है और गीतगोविन्द में अनेक राग एवं रागिनियाँ हैं। इनमें अनेक रस हैं, कथा माने नायक के इतिवृत्त का भी निर्वाह है। यही हाल फुटकर गीतों का भी है। उनमें भी रस तथा कथा का अंश रहता ही है। ये सब गाये जाते हैं। ये श्रव्य काव्य हैं, इसमें आचार्य अभिनव गुप्त का लेख ही प्रमाण है। नाट्य शास्त्र ४ अध्याय २७५ श्लोक गीतप्रयोग-माश्रित्य की टीका अभिनव भारती में आप लिखते हैं कि "गीयते इति गीतिं काव्यम्। तदुक्तं कोहलेन"—

> लयान्तर प्रयोगेण रागैश्चापि विवेचितम्।
> नानारसं सुनिर्वाह्यकथं काव्यमिति स्मृतम्॥

श्रव्य काव्य वही होता है जो देखा नहीं जा सकता और न जिसका अभिनय किया जा सकता है किन्तु जो केवल कानों को ही सुख देता है। जैसा कि सरस्वती कण्ठाभरण में कहा है :—

> श्रव्यं तत्काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते
> श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधम्। इति।

इतने विवेचन करने का तत्व यह है कि इन गीतों को सुनने वाली जनता का गीत सुनने पर यही व्यवहार होता है कि वाह २ बड़ा अच्छा गाना रहा। इस गवैये का कण्ठ ही मधुर है आदि। यह कोई नहीं कहता कि गाना तो सुना किन्तु अर्थ नहीं समझे। क्या यहाँ अर्थ नहीं है? मतलब केवल स्वर, ताल, लय एवं ध्वनि की ही प्रशंसा जनता करती है, उसी की चर्चा आपस में करती है, अर्थ के बारे में स्वप्न भी नहीं लेती। क्योंकि वहाँ शब्द और अर्थ

दोनों के रहते हुए शब्द रूप अंश ने अपने चमत्कार से जनता को प्रभावित किया है अतः उसी के नाम से व्यवहार होता है। फलतः अर्थ रहते हुए भी गीतकाव्य का लक्षण शब्द निष्ठ है।

एक अभिनेयार्थ काव्य है जो कि क्रीडनीयक माने खेल है। अभिज्ञान-शाकुन्तलम् वगैरह नाटक सब क्रीडनीयक हैं। इनमें शब्द और अर्थ दोनों ही अपने २ रूप में मौजूद हैं। अतः ये श्रव्य भी हैं और दृश्य भी है। जैसा कि नाट्यशास्त्र में आचार्य भरत ने लिखा है "क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत्। इति।" तब भी आचार्यों ने कहा कि यह नाटक वगैरह देवताओं के लिए मनोहर चाक्षुष यज्ञ है। इन नाट्यरूप रसों से देव, दानव एवं मानव सभी की चाक्षुषी प्रीती होती है। जैसा कि कहा है :—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम्।
नाट्यरूपै रसैरेतैः प्रीतिर्भवति चाक्षुषी ॥ (संगीत रत्नाकर)

कहने का सारांश यह है कि शब्द और अर्थ दोनों अंशों का अनुभव करती हुई भी जनता व्यवहार में यही कहती है कि गजब का अभिनय रहा, कितना सुन्दर प्रदर्शन किया कि कहते नहीं बनता आदि। क्या वहाँ शब्दों का उच्चारण नहीं होता है ? यहाँ कोई भी यह नहीं कहता कि दृश्य तो बड़ा सुन्दर रहा किन्तु अभिनेताओं का कथोपकथन नहीं सुना। मतलब चतुर्विध अभिनयों में से आंगिक अंगों का संचालन, परिचालन एवं विचलन, तथा आहार्यिक वेष भूषा एवं सात्विक हाव भाव एवं भुज और कटाक्ष आदि के विक्षेप और प्रक्षेप के विषय में ही केवल चर्चा जनता करती रहती है। वाचिक के विषय में जनता का मौनावलम्बन ही रहता है। फलतः शब्द के रहते हुए भी दृश्य काव्य का लक्षण अर्थ निष्ठ है।

इन दो तरह के काव्यों के अतिरिक्त कादम्बर्यादि गद्य काव्यों, रघुवंशादि पद्य काव्यों एवं चम्पूप्रभृति गद्य-पद्यमय काव्यों के लक्षण शब्द और अर्थ उभय निष्ठ हैं। यहाँ दोनों समकक्ष है। शब्द अर्थ की सहायता करता है व्यंजकता दशा में, क्योंकि काव्य की सीमा में शब्दबोध्य ही अर्थ व्यंजक होता है। इसी तरह अर्थ भी शब्द की सहायता करता है व्यंजकता अवस्था में, क्योंकि नानार्थक शब्द स्थल में अर्थान्तर से युक्त ही शब्द व्यंजक होता है। अतः दोनों की कक्षा समान है। इन्हीं काव्यों के विषय में जनता का व्यवहार भी यही होता है कि काव्य का उच्च स्वर से पाठ करते हैं, काव्य से अर्थ को समझते हैं काव्य तो सुना किन्तु अर्थ नहीं समझे। यदि शब्दार्थो भय रूप काव्य नहीं होता तो उपर्युक्त समझे और नहीं समझे यह व्यवहार कैसे होता ? क्योंकि प्राप्त ही का प्रतिषेध होता है अप्राप्त का नहीं। अतः उभयरूपता के विना एक अंश को प्राप्त किया दूसरे अंश को नहीं प्राप्त किया

यह कथन हो यह व्यवहार ही नहीं हो सकता है। किन्तु उपर्युक्त व्यहार होता है अतः सिद्ध है कि अर्थ भी काव्य के स्वरूप में निहित है। जैसे शंख भेरी आदि वादक यन्त्रों से उत्पन्न शब्द को सुनकर कोई नहीं कहता कि शब्द तो सुना किन्तु अर्थ नहीं समझे। क्योंकि यहाँ अर्थ का उद्भव सम्भव ही नहीं है। तब कैसे कोई वैसा कहे ? पठ्य काव्य में तो वे दोनों हैं अतः वैसा व्यवहार होता है। तस्मात् विश्वजनीन व्यवहार से शब्द और अर्थ दोनों काव्य पद के अर्थ सिद्ध होते हैं।

फलतः अर्थसहित शब्द का, शब्दसहित अर्थ का और समकक्षतया उपात्त इन दोनों का कवि की क्रिया से इदंप्रथमतया प्रकाशन काव्य है। इन तीनों प्रकार के काव्यों का शासन करने वाला शास्त्र काव्यशास्त्र है। इसका जानकार काव्यतीर्थ है जहाँ इन दोनों का सहभाव रहे और सहभाव के आश्रित जहाँ दोनों रहे वह साहित्य है काव्य है इसका भी शासन करने वाला शास्त्र साहित्य शास्त्र है। इसका विद्वान् साहित्याचार्य है। इस उपर्युक्त प्रतिपादन में यह सिद्ध हो गया कि इसको काव्यशास्त्र एवं साहित्यशास्त्र क्यों कहते हैं।

अब यह बतलाने का उपक्रम करते हैं कि इसको अलंकारशास्त्र भी कहते हैं और इसके जानकार आलंकारिक कहाते हैं। इसका मूल है वामनाचार्य के सूत्र

काव्यं ग्राह्यमलंकारात्। सौन्दर्यमलंकारः तथा ध्वनिकार का काव्यवृत्तेस्तदाश्रयात्, इत्यादि वाक्य।

यह काव्य है यह काव्य है ऐसे व्यवहार का आश्रय अलंकार है। किसी वाक्य को काव्य कहने का आधार अलंकार है। काव्य ग्राह्य है उपादेय है इस का कारण है अलंकार। अलंकार का अर्थ है सौन्दर्य माने चमत्कार। ठीक ही है। चमत्कार को नमस्कार जनता करती है। क्योंकि चमत्कार से शून्य की तरफ मन नहीं जाता है और विना मन के नमः नहीं होता है। जिस तरफ व्यक्ति का मन रहेगा उस तरफ जब मन चलेगा तो झुक जायगा तब मन का झुकना ही नमः है। जैसे कोई किसी पर दया करता है तो वह दया का पात्र व्यक्ति उस को याद करता है। अतः दया का उलटा याद होता है। अस्तु।

प्रकृत में काव्य की उपादेयता का मुख्य आधार अलंकार है। अतएव इस अलंकार से सम्पन्न काव्य का प्रकाश जिस से होता है या जिस में होता है वह काव्यप्रकाश नामक ग्रन्थ अलंकार से विशिष्ट काव्य का प्रकाशक है शासक है और "नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते" के अनुसार अलंकार सम्पन्न काव्य के विशेषण अलंकार का भी प्रकाशन करता है शासन

करता है। फलतः शासन करने के कारण अन्य शास्त्रों की तरह अलंकार शास्त्र भी एक शास्त्र हुआ और यह काव्यप्रकाश उस अलंकार शास्त्र का ग्रन्थ हुआ। और इसी के अनुसार काव्यप्रकाश के समकक्ष साहित्यदर्पण एवं रसगंगाधरादि सभी आधुनिक ग्रन्थ अलंकार शास्त्र के ग्रन्थ हुए तथा इस शास्त्र के जानने वाले विद्वान् आलंकारिक हुए। सौन्दर्यार्थक अलंकार से सम्पन्न काव्य के विशेषण अलंकार के शासन करने का आशय है कि सौन्दर्य के अनुग्राहक जो भी हैं उन सब का शासन करना। राजा राज्य का संचालक है शासक है इसका मतलब है कि राज्य के जितने अंग है आधायक है अनुग्राहक है उन सबका शासन करना। इसी सिद्धान्त के आधार पर ही इन आलंकारिक ग्रन्थों के प्रतिपाद्य रसादि एवं रसादि के उपयोगी विभिन्न पद एवं पदार्थ हैं।

उस अलंकार रूप सौन्दर्य माने चमत्कार के अनुग्राहक हैं आधायक हैं रस, भाव, रीति, दोषाभाव, गुण एवं अलंकार। सौन्दर्य अर्थ वाले अलंकार की व्युत्पत्ति है अलंकृतिरलंकार यह भाव प्रधान और उस अलंकार रूप सौन्दर्य के आधान करने वाले अलंकार की व्युत्पत्ति है अलंक्रियतेऽनेन ऐसी करण प्रधान। इस तरह सौन्दर्यार्थक अलंकार काव्य में नियत है। किन्तु सौन्दर्याधायक उपमादि अलंकार काव्य में नियत नहीं है अत एव आचार्य मम्मट ने काव्य लक्षण में अनलंकृती पुनः क्वापि लिखा है।

प्रकृत काव्यप्रकाश के तीन अंश है। सूत्र वृत्ति और उदाहरण। जिनमें उदाहरण सब दूसरों के बनाये हुए पद्य हैं। सूत्रों में भी बहुत जगहों में औरों की कृतियों का समावेश कर लिया गया है जैसे—तद्विशेषानाह—अब रस विशेषों को कहते हैं। एषां स्थायिभावानाह—इन रसों के स्थायी भावों को कहते हैं। "व्यभिचारिणो ब्रूते" अब व्यभिचारियों को कहते हैं इस तरह वृत्ति में अवतरणिका को लिख कर नाट्यशास्त्र की मूल कारिकाओं "शृंगारहास्य" को "रतिर्हासश्च" को "निर्वेदग्लानि" को और वामनसूत्र की वृत्ति में स्थित "कर्णावतंसादि" को भी, आक्षेपालंकार के भामहोक्त लक्षण

प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः, को
निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः

इस तरह और विभावनालंकार के लक्षण

"क्रियायाः प्रतिषेधे या तत्फलस्य विभावना को फलव्यक्तिर्विभावना कहकर और भामहोक्त पर्यायालंकार के लक्षण

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना।

का (सू० ) पर्यायोक्तं विना वाच्य वाचकत्वेन यद्वचः (वृ० ) वाच्यवाचक-भावव्यतिरिक्तेन अवगमनव्यापारेण यत् प्रतिपादनं तत् पर्यायेण भंग्यन्तरेण कथनात् पर्यायोक्तम् "

इस तरह सूत्र एवं वृत्ति के रूप में लेकर और भामहोक्त संकरालंकार के लक्षण

'एकस्य च ग्रहे न्यायदोषाभावे च संकरः' को

एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः

इस तरह अपना बना कर लिखा है।

यहाँ सूत्र और वृत्ति का एक मम्मट ही कर्त्ता है। इसलिए यह वृत्ति सूत्रकार के अभिमत अर्थ को पूरण करने वाली है। अतः सूत्रकर्त्ता और है तथा वृत्ति कर्त्ता और है ऐसी शंका नहीं करनी चाहिए। जहाँ सूत्रों के अनुसार पद एवं पदार्थ का विवेक रहे वह वृत्ति होती है अतः यहाँ यह वृत्ति का लक्षण यथार्थ संगत होता है। जैसे—ध्वनि के भेदों को वेदखाब्धिवियच्चन्द्राः १०४०४ इस सूत्र से दिखाया फिर ठीक इसी के अगले सूत्र में जो शरेषुयुगखेन्दवः १०२५५ दिखाते हैं वह दिखाना तब तक नहीं बनता है जब तक "शुद्धभेदैः सह" इस वृत्ति के अंश को इन सूत्रों में नहीं मिलायेंगे अतः यह मानना सिद्ध है कि वृत्ति एवं सूत्रों के कर्त्ता एक हैं और वृत्ति और सूत्रों का निर्माण साथ २ हुआ है। इस से तो और भी स्पष्ट होता है कि "समस्त वस्तुविषयं श्रौता आरोपिता यदि" इस सूत्र और "श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्" इस सूत्र के मध्य की आरोपिता इति बहुवचनमविवक्षितम्" इस वृत्ति का सम्बन्ध प्रथम सूत्र से करना आवश्यक नहीं है क्योंकि प्रथम सूत्र के उदाहरण "ज्योत्स्ना भस्म" पद्य में भस्मादि आरोप्यमाण बहुत हैं। किन्तु द्वितीय सूत्र से सम्बन्ध करना आवश्यक है क्योंकि रण में अन्तःपुरत्व का श्रौत आरोप एक ही है और सूत्र में "श्रौताः" बहुवचन है। इसी तरह मण्डलाग्रलता में नायिकात्व का और रिपु सेना में प्रतिनायिकात्व का आर्थ आरोप है जो दो हो आर्थ आरोप हैं किन्तु सूत्र में आर्थाः बहुवचन है। फलतः सूत्रकार ने अपनी असंगति का निराकरण अविवक्षित रूप वृत्ति के द्वारा किया इस से दोनों का कर्त्ता एक ही है। यदि वृत्तिकार दूसरे होते तो अविवक्षितं नहीं लिखते। क्योंकि विवक्षा वक्ता की होती है वृत्तिकार के सूत्रकार की अपेक्षा से दूसरे होने पर तो वक्ता वृत्तिकार नहीं हो पाते हैं। एक बात और भो है यदि वृत्तिकार स्वयं सूत्रकार नहीं होते तो सूत्रे लिंगवचनमतन्त्रम्" इस नियम का ही उद्धरण देते अववक्षितं नहीं लिखते। अतः दोनों एक ही है। "माला तु पूर्ववत्" यह लेख तो सूत्रकार और वृत्तिकार की एकता को निर्विवाद सिद्ध करता है। क्योंकि पूर्व में सूत्र में नहीं दिखलाये हुए किन्तु वृत्ति में दिखलाये हुए मालात्मक भेद को जो सूत्र में उपन्यास करते हैं वह

उपन्यास सूत्र एवं वृत्ति के एक कर्तृक हुए विना नहीं बन सकता है। वृत्ति में कही हुई भी माला को प्रमेयशय्या के पूरण करने के लिए सूत्र रूप में कथन किया अतः दोनों एक ही है।

मम्मट कब हुए कहाँ हुए और कब उन्होंने इस ग्रन्थ का निर्माण किया इत्यादिक ऐतिहासिक तथ्यों के जिज्ञासु लोग कवियों के इतिहास के लेखक की शरण लेवें और अपनी जिज्ञासा की पूर्ति करें।

यहाँ अलंकार रूप सौन्दर्य के आधार पर ग्राह्य काव्य के लक्षण को भी सौन्दर्याधायक तत्त्वों के अनुसार ही लिखा है "तददोषौ सगुणौ अनलंकृती पुनः क्वापि शब्दार्थौ।" इसमें तद् शब्द का अर्थ काव्य है जो उद्देश्य है उसका निरूपण उत्तम ध्वनि काव्य नाम से किया जिसके भेद १०४५५ दश हजार चार सौ पचपन है—मध्यम गुणीभूतव्यङ्ग्य है जिसके भेद ४५१५८४ है और अधम चित्र काव्य है जिसके भेद २ दो हैं। इसी तरह विधेयभूत शब्द और अर्थों का निरूपण किया। जिनमें वाचक लक्षण एवं व्यञ्जक भेद से तीन प्रकार के शब्दों को और वाच्य लक्ष्य और व्यङ्ग्य भेद से तीन प्रकार के अर्थों को बतलाकर भी चौथे वाक्य रूपी शब्द को और तात्पर्यरूप अर्थ को बतलाया तदनुसार शब्द की सहायिका अभिधा लक्षणा एवं व्यञ्जना तीन वृत्तियों को बतलाकर चौथी तात्पर्याख्या वृत्ति को भी बतलाया। इसी के अनुसार विधेय शब्द एवं अर्थ के विशेषण दोषाभाव गुण और अलंकारों का निरूपण किया। जिनमें १६ पद दोष, २१ वाक्य दोष, २३ अर्थ दोष एवं १० रस दोषों को ३ गुणों को ६१ अलंकारों को बतलाया है। मम्मटाचार्य ने इन सूत्र वृत्ति एवं उदाहरणों का उपन्यास परिकरालंकार तक ही किया है आगे के हिस्से की पूर्ति अल्लटाचार्य ने की है।

काव्य के लक्षण में अदोषौ कह कर अभाव को स्वतन्त्र रूप से गुण से पृथक् माना तथा सप्तमोल्लास में भी दोषाभाव के प्रतियोगी दोषों को त्याज्यत्वेन निरूपण कर के अभाव को गुण से पृथक् माना किन्तु विरोधालंकार प्रकरण में जाति क्रिया एवं द्रव्य से अतिरिक्त अभाव पदार्थ का गुण में ही अन्तर्भाव होता है इसको तथा अपदोषतैव विगुणस्य गुणः इस न्याय के अनुसार दोषाभाव गुण रूप है अतः अभाव का गुण में ही अन्तर्भाव होता है इसको भी मान लिया। कोई एक सिद्धान्त नहीं रखा गंगा गये गंगादास यमुना गये यमुनादास हो गये।

ग्रन्थ में लेखाशुद्धि विषयाशुद्धि एवं प्रसङ्गासङ्गति प्रायः प्रत्येक उल्लास में है लेखाशुद्धि जैसे—सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम्। यहाँ प्रकृत में देखना है कि घृतमायुः। इदमेव आयुः। एषु उदाहरणेषु सादृश्याद् अन्यः कार्यकारणभावादिः सम्बन्धः। इसमें आयुर्घृतम् आयुरेवेदम् लिखकर

उभयरूपा चेयं शुद्धा उपचारेणामिश्रितत्वात्। अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष

## मधुसूदनी

लक्षणेनेत्यस्य च द्वयोर्मध्ये "आदौ" इति सप्तम्यन्तं पदमसंगतं प्रतिभाति। यतः इत्येवं रूपेण लक्षणेनेतिदिशा अन्वयकरणे इत्येवमादिपदार्थः लक्षणपदार्थस्य विशेषणम्। इति तन्मध्ये आदावितिसप्तम्यन्तस्यावश्यकतैव नास्ति। वक्ष्यमाण-दिशा शुद्धायां तादूरूप्यमभेदो वा नास्ति किन्तु भेदः। कुत एतदित्याह—उपचारेणेति।

उपचारेणामिश्रणात् सादृश्येनायोगात् सादृश्यसम्बन्धेन असत्त्वात् शुद्धेति। इदं तात्पर्यमिह। सादृश्याद् गौणीति गौणभेदयोर्भेदेऽपि तादूरूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनमिति। ताटस्थ्यमिति। 'तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोरिति' बलः। तटस्थस्य भावः कर्म वा ताटस्थ्यमौदासीन्यं तीरस्थितिमत्वं निकटस्थितिशालित्वमिति बहुरूपं ताटस्थ्यं दृश्यते। ग्रन्थ-कारस्तु एभ्योऽतिरिक्तं भेदरूपं ताटस्थ्यं मत्वाह=न भेदरूपं ताटस्थ्यमिति।

## बालक्रीड़ा

यह लक्षणा लक्षणलक्षणा है। यहाँ अपर्यतीत्येवम् और लक्षणेन के बीच में "आदौ" इस सम्यन्त पद का उपन्यास व्यर्थ है। क्योंकि प्रकृत में लक्षणलक्षणा का समन्वय दिखाते हैं। "गंगायां घोषः इत्यत्र" यह इत्यत्र इस रूप में केवल एक उदाहरण है जिसमें तटस्य इस रूप में एक लक्ष्य और गंगाशब्दः इस रूप में एक केवल लक्षक शब्द का उल्लेख है। यदि पूर्व में यहाँ इत्यत्र की जगह पर इत्यादौ उल्लेख होता तो आदिपदार्थ के संग्रह के लिए आगे भी समन्वय में संग्रह के लिए इत्येवमादिलक्षणेन इस रूप में आवश्यक होता किन्तु पूर्व में इत्यादौ नहीं है इत्यत्र ऐसा उल्लेख है अतः संग्राह्य कोई नहीं है। इसके सिवाय "इत्येवमादौ" इस रूप में सप्तम्यन्त पद तो सर्वथा अशुद्ध है। क्योंकि समन्वय प्रकरण है इसमें "इत्येवम्" यह लक्षणेन का विशेषण है फिर भी यदि आदि पद का उपन्यास करना है तब या तो इत्येवमादिना लक्षणेन इस तरह व्यस्त पाठ या फिर इत्येवमादिलक्षणेन ऐसा समस्त पाठ कहना उचित होगा यदि पूर्व में इत्यादौ होगा तो।

तस्मात् इत्येवंलक्षणेन यही पाठ शुद्ध है। उपादान एवं लक्षण इन दोनों रूपों वाली यह लक्षणा शुद्धा है गौणी नहीं है। क्योंकि यह उपचार से मिश्रित नहीं है। उपचार का अर्थ सादृश्य है। उपचार का अर्थ कोई लोग ऐसा कहते हैं कि दो भिन्न पदार्थों में सादृश्य के कारण भिन्नता की प्रतीति का स्थगन। अर्थात् सादृश्य मूलक अभेद। शुद्धा में उपचार अभेद नहीं है किन्तु भेद है। इसका खण्डन ग्रन्थकार कहते हैं कि 'लक्षणा के इन उपादान एवं लक्षणरूप उभय भेदों में या कुन्ताः प्रविशन्ति गंगायां

इति मुख्यशब्दाभिधानात् (लक्षणायाः ?) अमुख्यशब्दाभिधानस्य को भेदः ।

### मधुसूदनी

भेदो विरुद्धधर्मज्ञानम् । अयमेव हि भेदो भेदहेतुर्वा भावानां योऽयं विरुद्धधर्माध्यासः कारणभेदश्चेत्युक्तेः । अनयोः समनन्तरमुक्तयोर्भेदयोरुपादानलक्षणालक्षणलक्षणाख्ययोः प्रकारयोः । अथवा भेदयोरुक्तायाः "कुन्ताः प्रविशन्ति" इत्युपादानलक्षणायाः, गंगायां घोष इति लक्षणलक्षणायाश्च उदाहरणयोः । लक्ष्यस्य कुन्तधरपुरुषस्य तटस्य च । लक्षकस्य कुन्तस्य गंगायां च इत्युभयोर्मध्ये कुन्तकुन्तधरयोः, गंगातटयोर्विरुद्धकुन्तत्वकुन्तधरत्वगंगात्वतटत्वधर्मज्ञानरूपं ताटस्थ्यं नास्ति । निषेधे हेतुद्वयमुपन्यस्यति-तयोर्भेदे हि विरुद्धधर्मज्ञाने हि प्रतिपादयिषितानामेकत्र गहनत्वतीक्ष्णत्वादीनामपरत्र शीतलत्वपावनत्वसेव्यत्वादीनां प्रयोजनानां संप्रत्ययो न स्यात् । स तु संप्रत्ययः तत्त्वप्रतिपत्तौ कुन्तधरे कुन्तत्वस्य तटे गंगात्वस्य ज्ञाने एव स्यात् । तत्त्वप्रतिपत्तिश्च कुन्तधरतटादीनां कुन्तगंगादिशब्दाभ्यां प्रतिपादने एव स्यादन्यथा न । अयं प्रथमो हेतुः ।

भेदे विरुद्धधर्मज्ञानरूपे अर्थात् गंगात्वविरुद्धतटत्वधर्मप्रतीतौ सत्यां तु गंगातटे घोष इति मुख्यशब्दाभिधानात् गंगायां घोष इति अमुख्यशब्दाभिधानस्य को भेदः किं वैलक्षण्यम् । अयं द्वितीयो हेतुः । एवं सादृश्यमिश्रणे अभेदः । सादृश्यामिश्रणे भेद इति केषामभिप्रायो विशृङ्खलः प्रकृतेऽपि अभेदस्यानुभूयमानत्वादिति । गंगासम्बन्धमात्रप्रतीतौ तु इत्यत्र सम्बन्धमात्रेति

### बालक्रीड़ा

घोषः इन उदाहरणों में लक्ष्य एवं लक्षक में भेदरूप ताटस्थ्य नहीं है । यहाँ "तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोः" इस बल नामक कोषकार के अनुसार तटस्थ शब्द के उदासीनत्व तीरस्थितिमत्व एवं निकटस्थितिशालित्व रूप कई अर्थ है किन्तु आचार्य मम्मट ने इनसे भिन्न भेदरूप ताटस्थ्य माना है । अतः कहते हैं कि तट आदि का गंगा आदि शब्दों से अर्थात् गंगायां घोष इस तरह अमुख्य गंगाशब्द से तट का प्रतिपादन करते हैं तभी तट में गंगात्व की प्रतिपत्ति यानी गंगाभिन्नतट का बोध होता है और अभेद की प्रतिपत्ति होने पर ही इन शैत्य पावनत्व आदि प्रयोजनों का संप्रत्यय होगा जिन का प्रतिपादन करना चाहते है । यदि कहें कि तटस्थित घोष में शीतलता पवित्रता आदि की प्रतीति करना या कराना चाहते हैं किन्तु वह होगी जल के सम्बन्ध से ही । अब प्रश्न होता है कि किस जल से यमुनाजल या गण्डकी जल या गंगाजल से सम्बन्ध किया जाय । इस पर उत्तर कहा कि गंगाजल से । इसका खण्डन ग्रन्थकार करते हैं कि इस तरह तट से केवल गंगा का सम्बन्ध ही प्रतीत करना अभीष्ट है तब तो गंगातटे घोषः इस तरह तट को मुख्यशब्द से ही कहना चहिए गंगायां घोषः इस अमुख्यशब्द से नही । क्योंकि गंगा

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

### मधुसूदनी

शब्दस्य विन्यासः गंगायाः सम्बन्धमात्रविषये निरूपणस्य प्रदर्शनस्य वा अवसरः। यतः अत्र हि गंगात्वप्रतिपत्तिः सम्बन्धमात्रप्रतिपत्तिनिराकरणं च निरूपणीये ।

अन्यच्च—स्वप्रदर्शितलक्षणालक्षणं समर्थयितुं प्रदर्शिते तन्त्रवार्तिके अभिधेयाविनाभूतप्रतीत लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता। नियतसम्बन्धवाचकमपि अविनाभावपदं लक्षणाप्रसंगे सम्बन्धमात्रपरतया व्याचक्षाण आचार्यमम्मटः प्रकृते सम्बम्धमात्रत्वं निषेधति। गंगात्वे प्रयोजनसंप्रत्ययः इत्येवं तत्वे तत्सत्वमित्यन्वयस्य। भेदे प्रयोजनसंप्रत्ययो न इत्येवं तदभावे तदभाव इति व्यतिरेकस्य प्रदर्शनावसरे सम्बन्धमात्रनिषेधनस्याऽवसर? । इति। मुख्यशब्दाभिधानात् अमुख्यशब्दाभिधानस्य को भेदः इत्ययं पाठो

### मधुसूदनी

के सम्बन्ध मात्र की प्रतीति मानने पर तो मुख्यशब्द के अभिधान से अमुख्यशब्द के अभिधान का कोई भेद ही नही रहा। जब सम्बन्ध का ही ज्ञान करना है•अभेद का—जिसके बदौलत शीतलता की प्रतीति होती है—नहीं तब गंगातटे घोषः कहने और गंगायां घोषः कहने में क्या भेद है।

यहां पर "मुख्यशब्दाभिधानात् के बाद "लक्षणायाः यह पाठ प्रस्तुत के समुचित नही है। यहां प्रस्ताव है कि तट स्थित घोष में शीतलता की प्रतीति करना है वह प्रतीति तभी होगी जब तट गंगा बन जाय यानी दोनों अभिन्न हो जाँय; अभिन्नता का उपाय है तट का गंगा शब्द से ही कहना। क्योंकि गंगाका नितान्त सामीप्य तट में रहेगा तभी उसमें शीतता की प्रतीति होगी। तट तो गंगा से कुछ दूर रहने पर भी कहलाता ही है। उस नितान्त सामीप्य को बतलाने के लिए ही तट को गंगा शब्द से कहते हैं अतः मुख्यशब्दाभिधानादमुख्यशब्दाभिधानस्य को भेदः" यही पाठ युक्ति युक्त है। "लक्षणायाः" पद संघटित समुचित नही है।

अभिधान ही अभिधा है इस विग्रह के अनुसार मुख्यशब्दनिष्ठा अभिधा से यह अर्थ अभिधान का हो सकता है। और गोशब्दस्य परार्थाभिधाने में जैसे अभिधाने का अभिधा से बोधन अर्थ होता है वैसे भी हो सकता है किन्तु प्रकृत है "तटादीनां गंगादि शब्दैः प्रतिपादन" अतः उक्त प्रक्रिया के अनुरोध से अभिधान का प्रतिपादन कथन ही अर्थ है। इसके सिवाय गंगातटे घोषः इस वाक्य में उपात्तमुख्यतटशब्द की अभिधा से लक्षणा का क्या भेद है यह कौन संगति हुई। मुख्यशब्द के द्वारा कथन से अमुख्यशब्द के द्वारा कथन का क्या भेद है इसमें अर्थ की संगति हो जाती है

लक्षणा के अन्य भेदों के निरूपण का उपक्रम करते हैं—"सारोपाऽन्या तु" यहाँ

आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते, सा लक्षणा सारोपा।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥११॥**

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात्।

**भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ—**

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र

## मधुसूदनी

वा मुख्यशब्दाभिधातो लक्षणायाः को भेद इति वा पाठः समञ्जसः स्यात्। अन्यथा तु न समञ्जसः। अभिधानमभिधा इति विग्रहणं ततश्च मुख्यशब्दगतादभिधानादभिधातः सकाशात् लक्षणाया इति समञ्जसः स्यात्। किन्तु प्रस्तुतसमुचितं नास्ति।

## बालक्रीड़ा

"अन्यस्तु" में तु शब्द का अर्थ समुच्चय है जैसा कि तुः पादपूरणे भेदे समुच्चयेऽवधारणे। पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे यह कोष है। अतः उपादान एवं लक्षण से अन्य सारोपा एवं साध्यवसानिका भी शुद्धा के भेद होते हैं। जहां विषयी और विषय तथा माने (जिस प्रकार से जिस विषयित्व और विषयत्व धर्म से युक्त हैं) उस प्रकार से कहे जाते है वह सारोपा है। यहां मूल में तथा शब्द है उसमें तत् शब्द से प्रकार अर्थ में थाल् प्रत्यय हुआ है। प्रकार का अर्थ है प्रकृतिजन्यबोधे प्रकारो भावः के अनुसार भाव धर्म। इस लिए उक्त अर्थ किया। आरोप्यमाण और आरोपका विषय दोनों जहाँ अनपन्हुत भेदवाले सामानाधिकरण्य से निर्दिष्ट हों वह लक्षणा सारोपा है। भेद का अपह्नव तिरोधान अभेद में होता है अतः अनपन्हुत भेद माने अभेद जिनमें नहीं है। अनपन्हुतभेद की स्थिति तब होती है जब वे अपने अपने धर्म विषयित्व एवं विषयत्व धर्म से युक्त हों इस लिए कहा कि सामानाधिकरण्येन। इसका अक्षरार्थ है समान बराबर अधिकरण स्थान वालों का धर्म विषयित्व और विषयत्व उससे निर्दिष्ट कहे गये हों।

जहां अन्य माने आरोपका विषय, विषयी आरोप्यमाण से निगीर्ण अन्तः कृत किया गया हो वह साध्यवसानिका है।

और ये दोनो भेद जैसे सादृश्यसम्बन्ध से होते हैं वैसे ही अन्य सम्बन्धों से भी होते हैं अतः इनको गौण और शुद्ध जानना चाहिए। सादृश्य हेतु सारोप और साध्यवसानरूप ये भेद वाहीक गौहै इस में और यही गौ है इसमें हैं।

च। अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति इति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता एव (न तु स्वार्थगताः) गुणा एव लक्ष्यन्ते एव न तु परार्थो-

## मधुसूदनी

अत्र हीति गौर्वाहीक इत्यत्र गौणीलक्षणाया लक्ष्यं किमिति विचारे मतत्रयं वर्तते। केचिदिति अन्ये इति अपरे इति च। तत्र पूर्वस्मिन् मते "स्वार्थ-सहचारिणो (यत्र गवि गोत्वं चरति तेन गोत्वेन सह जाड्यमान्द्यादयो गुणा अपि तत्र गवि चरन्ति। ते) गोगता गुणा जाड्यमान्द्यादयो लक्ष्यमाणाः इत्येवं स्वार्थ गता गुणा लक्ष्याः। स्वार्थसहचारित्वं लक्षणाप्रयोजकः सम्बन्धः। स्वं गो-शब्दस्तस्यार्थो गोत्वं तत्सहचारित्वम्। यथा गोगतं गोत्वं गोशब्दस्य गवार्था-भिधाने प्रवृत्तेः निमित्तं तथा गोपिण्डगता एव किन्तु असंकेतितया लक्ष्यमाणा जाड्यमान्द्यादयो गुणा गोशब्दस्य वाहीकार्थाभिधाने प्रवृत्तेर्निमित्ततामर्हन्ति। एष प्रथममतस्य सारः।

अत्र द्वितीयमतवादी कथयति स्वार्थसहचारिगुणाभेदेन परार्थगता एव

## बालक्रीड़ा

यहां "वाहीक गौ है" इस वाक्य के अर्थ करने में लोगों की विभिन्न शैली है। इसमें पहिले दो मत हैं—एक लक्षणावादियों का दूसरा लक्षणाभाववादियों का। गवाभिन्न-वाहीक है चन्द्राभिन्न मुख है ऐसा अभेद बोध दोनो के मतमें है। लक्षणावादियो के मत में वह अभेद लक्षणा के बाद व्यंजना से होता है। अभाववादियों के मत में वह अभेद नामार्थयोरभेदान्वयः इस व्युत्पत्ति से होता है। क्योंकि बाधबुद्धि शाब्द बोध में प्रतिबन्धक नहीं होती है यह स्वभाव सिद्ध है। लक्षणावादियों के यहाँ लक्ष्य की उपस्थिति और अभेद के लिए अपेक्षित की उपस्थिति के बारे में पहिले मतवालों का कहना है कि गवा-भिन्न वाहीक है ऐसा बोध वाहीक गौ है इस वाक्य से होता है। किन्तु इस बोध में गोत्व और वाहीकत्व ये परस्पर विरोधी धर्म बाधक हैं। क्योंकि "वाहीको हलवाहकः" इस कोष के अनुसार हलवाहक मनुष्य को वाहीक कहते है और गौ पशु है। इसके लिए जैसे देवो गच्छति में देव तो कर्त्ता है ही और गच्छति के तिप् से भी कर्त्ता की उपस्थिति होती है अतः देवाभिन्नो गमनकर्त्ता ऐसा बोध होता है उसी तरह प्रकृत में भी वाहीक से तो वाहीक की उपस्थिति होती ही है गो शब्द से भी वाहीक की उपस्थिति होनी आवश्यक है। इसके लिए गो शब्द की स्वार्थ सहचारित्व या स्वार्थगतत्व सम्बन्ध से स्वगतजाड्य मान्द्यादि गुणों में लक्षणा करना और लक्ष्यमाण गुणों का प्रकृष्टा मुख्या वृत्ति अभिधा के लिए निमित्त बनना उपाय है। जिसके फलस्वरूप गोत्व में शक्त अत एव गोत्वाभि-धायक गौः पद से जैसे गौ का बोध होता है वैसे ही जाड्यादि में लक्षणावान् अतएव जाड्यादि लक्षक गौ पद से जाड्यादि रूप से वाहीक का बोध हो जायगा।

दूसरे मतवालों का कहना है कि एक नियम है कि जिस शब्द का जिस अर्थ में

ऽभिधीयत इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे।

मधुसूदनी

न तु स्वार्थगताः। गुणा एव न तु गुणी परार्थः। लक्ष्यन्ते एव न तु अभिधीयते। स्वार्थसहचारिगुणैः सह परार्थसहचारिगुणानामभेदः। एवं च गुणानां परस्परमभेदेन गुणिनामपि परस्परमभेदः लक्षणायाः फलम्। तृतीयमतवादी कथयति-अस्तु गुणाभेदद्वारा गुणिषु अभेदः। परं गुणिनामुपस्थितिरेवात्र नास्ति। यावत्तेषामुपस्थितिर्न स्यात्तावत्केषामभेदः स्यादतः "साधारणः समानश्चेति अमरकोषानुसारं साधारणानां समानानां गुणानामाश्रयौ विषयौ आधारौ गोवाहीकौ तयोर्भवः साधारणगुणाश्रयत्वं सम्बन्धस्तेन परार्थ एव वाहीकार्थं एव लक्ष्यते न तु स्वार्थगता वा परार्थगता वा गुणा लक्ष्यन्ते। इत्येवं सुस्पष्टं व्याख्यानात् स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधायते इत्यत्रत्यः परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इति पाठोऽसंगतः। तस्मात् परार्थगता एव न तु स्वार्थगताः। गुणा एव न तु गुणी। लक्ष्यन्ते एव न तु अभिधीयते! इति पाठः साधीयान्।

बालक्रीड़ा

संकेत होता है वही सांकेतिक अर्थ ही उस शब्द की प्रवृत्ति में निमित्त होता है अन्य नहीं-इस के अनुसार गो शब्द का वाहीक अर्थ में संकेत नही होने से वाहीक अर्थ गो शब्द का प्रवृत्ति निमित्त नहीं बन सकता है अतः गो शब्द से वाहीक अर्थ उपस्थित नहीं होगा जिससे गवाभिन्नो वाहीकः ऐसा बोध नहीं होगा। इसके लिए गो गत गुणों में लक्षणा करेंगे। और उनसे वाहीक का बोध करेंगे, यह तो अन्यद् भुक्तम् अन्यद् वान्तम् ही हुआ। किन्तु नियम है। उपस्थिति एवं शाब्द बोध में समानाकारता का। तस्मात् गोशब्दार्थ सहचारि गुणाभेद से अर्थात् गोगत गुणसजातीयगुणवत्व सम्बन्ध से परार्थ में ही रहनेवाले न कि स्वार्थ में रहने वाले गुण ही न कि गुणी लक्षणा से ही न कि अभिधा से जाने जाते हैं। क्योंकि अनन्यलभ्य ही शब्द का अर्थ होता है अतः अभिधा से गुणी का बोध नहीं होगा इसके लिए गुणों में लक्षणा करेंगे और गुणी का लाभ "येन विना यदनुपपन्नं तत्तेनाक्षिप्यते" इस न्याय के अनुसार आक्षेप से स्वतः हो जायगा। इस तरह इन लोगों ने प्रथम मत वालों की "स्वार्थसहचारित्व सम्बन्ध से १ स्वार्थगत गुण लक्ष्यमाण है २ और परार्थ का बोध अभिधा से होता है ३ इन तीनों मान्यताओं के विरोध में अपनी चार मान्यताएँ कहीं। जैसे—स्वार्थसहचारिगुणाभेद सम्बन्ध से १ परार्थगत ही न कि स्वार्थगत २ गुण ही न कि गुणी परार्थ ३ लक्ष्यमाण ही है न कि अभिधीयमान है ४। अतः यहाँ पर तीन एवकार और उनके अनुसार उनके तीन व्यावर्त्य होने चाहिए। जैसे परार्थगता एव न तु स्वार्थगताः। गुणा एव लक्ष्यन्ते एव न तु गुणी परार्थोऽभिधीयते।

इसपर तृतीय मत वालों का कहना है कि गवाभिन्नो वाहीकः यह अन्वय अभीष्ट है

उक्तञ्चान्यत्र—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ।।" इति ।

## मधुसूदनी

लक्ष्यमाणगुणैरिति । लक्ष्यमाणे गौर्वाहीक इत्यत्र गोशब्दाल्लक्षणया ज्ञायमाने वाहीके तिष्ठद्भिर्गुणैः जाड्यमान्द्यादिभिर्योगात् संबन्धाज्जायमानायाः वृत्तेर्गौणता इष्टा ।

इदं व्याख्यानमेव हृदि निधाय साधारणगुणाश्रयत्वेन सम्बन्धेन परार्थं एव लक्ष्यते इत्युक्तम् । एवञ्च उभयसाधारणलक्ष्यमाणगुणैरिति लक्ष्यमाणा ये गुणा जाड्यादयस्तैरेव यदि योगः शक्यसम्बन्धस्तदा गौणी वृत्तिरिति प्रदीपकारव्याख्यानं कलनीयम् ।

## बालक्रीड़ा

इसकी उपपत्ति अभिधा से नहीं हुई तब आप अनुपपत्ति को दूर करने और उपपत्ति को बैठाने के लिए बड़े आडम्बर के साथ लक्षणा को लाये उससे भी अनुपपत्ति दूर नहीं हुई उपपत्ति नहीं बैठी और आक्षेप किया तब व्यर्थ ही प्रयास हुआ क्योंकि आक्षेप से जहाँ सिद्धि हो सकती है वहाँ लक्षणा का उपयोग नही होता है अतः साधारण गोवाहीको भयानुगत गुणों जाड्यमान्द्यादि के वैशिष्ट्य से ( आश्रयत्व रूप सम्बन्ध से ) गोपद से पर वाहीकरूप अर्थ ही लक्षणा से प्राप्त होता है । यही ठीक है ।

इसमें प्रमाण का उपन्यास करते हैं कि और जगह में भी कहा है । यह भट्टजी के भट्टवार्तिक ग्रन्थ का एक वार्तिक है । "अभिधेय" । प्रत्यक्षादि प्रमाणों से विरोध होने पर अभिधेय शक्य के अविनाभूत सम्बद्ध अर्थात् असाधारण सम्बन्ध विशेष विशिष्ट जो अर्थ उसकी प्रतीति जिससे होती है वह वृत्ति लक्षणा है । लक्ष्यमाण लक्षणा से ज्ञायमान लक्ष्य के गुणों के साथ योग सम्बन्ध होने से जायमान वृत्ति गौणी है । जैसे वाहीक गौ है इसमें गौः पद से लक्षणा के द्वारा ज्ञायमान वाहीक में वर्तमान गुणों के साथ सम्बन्ध से होने वाली वृत्ति गौणी मानी गई है । इसी व्याख्यान को हृदय में रखकर आचार्य मम्मट ने "साधारणगुणाश्रयत्व सम्बन्ध से परार्थ ही लक्षणा से प्राप्त होता है" ऐसा कहा इस तरह लक्ष्यमाण जो परार्थ तद्गत गुणों के योग से लक्षणा गौणी है यह स्पष्ट हो गया । अतः "लक्ष्यमाण जो गुण जाड्यमान्द्यादि" ऐसा प्रदीपकार का व्याख्यान असंगत है मम्मटाचार्य के मत के प्रतिकूल है । क्योंकि जिसने अपने मत की पुष्टि के लिए प्रमाण रूप से इस वार्तिक का उपन्यास किया उस मम्मट के मत में गुण लक्ष्यमाण नहीं है उनके मतमें परार्थ लक्ष्यमाण है क्योंकि परार्थो लक्ष्यते यह स्पष्ट ही लिखा है । अतः उक्त व्याख्यान असंगत है ।

यहाँ भट्टवार्तिक के वार्तिक में अविनाभूत पद में प्रविष्ट अविनाभाव का अर्थ

अविनाभावोऽत्र सम्बन्धमात्रम् न तु नान्तरीयकत्वम्। तत्त्वे हि मञ्चाः क्रोशन्तीत्यादौ न लक्षणा स्याद्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।

आयुर्घृतम् आयुरिदमेवेत्यादौ च सादृश्यादन्यः कार्यकारणभावादिः

मधुसूदनी

"भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा" इत्यत्रत्यसम्बन्धान्तरतः इति पदस्य स्वारस्य प्रदर्शनावसरे आयुर्घृतम् आयुरिदमेव इत्यादौ च सादृश्यादिति। लिखित्वा। अन्यत् कार्यकारणभावादि सम्बन्धान्तरमिति लेखनं दुष्टम्। अत्र अन्यदिति पदस्य सद्भावे अन्तरमिति पदस्य निरर्थकत्वम्। यदा अन्यदिति पदं दत्तं तर्हि तदर्थकस्यैव अन्तरमिति पदस्य विन्यासे को हेतुः। अतः सादृश्यादन्यः कार्यकारणभावादिः सम्बन्धः इति सम्बन्धान्तरमित्यस्य व्याख्याभूतः पाठः साधुः "एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने" इत्यत्रापि एवमादौ च कार्यकारणभावादिसम्बन्धपूर्वे आरोपाध्यवसाने लक्षणे इति पाठोऽवसेयः।

बालक्रीड़ा

सम्बन्धमात्र ही है न कि नान्तरीयकत्व यानी व्याप्ति। यदि नान्तरीयकत्व को मानेंगे तो "मञ्चाः क्रोशन्ति" में मञ्चपद की मञ्चस्थ बालक में लक्षणा नहीं होगी। क्योंकि व्याप्ति के सद्भाव में आक्षेपसे ही अर्थ की सिद्धि हो जाती है अतः वहाँ लक्षणा का कोई उपयोग नहीं है यह कथा गौरनुबन्ध्यः की व्याख्या के समय में कहदी गई है। यहाँ "अविनाभावे च इसमें अविनाभाव पद खटकता है। क्योंकि जब आप प्रकृत वार्तिकस्थ अविनाभाव शब्द का अर्थ सम्बन्धमात्र मान चुके हैं और व्याप्ति रूप अर्थ का निषेध कर चुके हैं तथा इस शब्द का व्याप्ति अर्थ मानने में एक दोषको दिखाकर दूसरा दिखाने जा रहे हैं अभी उसी वार्तिक का प्रसंग अनुस्यूत है तब ऐसी हालत में सम्बन्धमात्र बोधक अविनाभाव शब्द का उपन्यास करना असंगत ही होगा। अतः यहाँ पर "तदर्थकत्वे च" ऐसा पाठ लिखना समुचित होगा।

घी ही आयु है यही आयु है। इत्यादि में सादृश्य से अन्य कार्य कारण भाव आदि सम्बन्ध है। आयु कार्य है और घी कारण है। अतः आयुष्ट्वेन घृत को लक्षणा से कहा है। यहाँ इतना अवश्य समझ लेना चाहिए कि गौर्वाहीकः, गौरयम्, आयुर्घृतम्, आयुरिदमेव नीलो घटः इत्यादि में विधेय का पूर्व में कथन रूप अविमर्श दोष है। किन्तु गवाभिन्नो वाहीकः आयुरभिन्नं घृतमित्यादि बोध की वासना हृदय में हैं इसकी सूचना के लिए गौरादि पदों का पूर्व में उपन्यास किया है।

यहाँ पर 'भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा" इस कारिका के 'सम्बन्धान्तरं' पद की व्याख्या के रूप में वृत्ति में "सादृश्यादन्यत् कार्य कारण भावादि सम्बन्धान्तरम्" लिखा है जो कि अशुद्ध है। क्योंकि अन्यत् पद का जब उपन्यास कर दिया तब पुनः

संबन्धः। एवमादौ च कार्यकारणभावादिसम्बन्धपूर्वे आरोपाध्यवसाने लक्षणे। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाऽभेदावगमश्च प्रयोजनम्। शुद्धभे-

## मधुसूदनी

कार्यकारणभावादि लक्षणं स्वरूपं यस्य सम्बन्धस्य स तथोक्तलक्षणः सम्बन्धः पूर्वः ययोरिति रीत्यापि पर्यन्ते सम्बन्धो विवक्षणीयः। अतः तथा एव पाठः साधुः।

## बालक्रीड़ा

अन्यार्थक अन्तर पद की क्या आवश्यकता है अतः "इत्यादौ सादृश्यादन्यः कार्यकारण-भावादिः सम्बन्धः" ऐसा पाठ साधु है।

घीही आयु है "इत्यादि में जब सादृश्य से भिन्न कार्यकारण भाव सम्बन्ध है तब कौन लक्षणा यहाँ है इसके उत्तर में कहते हैं कि "एवमादौ। इस तरह के उदाहरणों में कार्यकारण भाव आदि सम्बन्ध है पूर्व माने हेतु जिसमें ऐसी आरोप एवं अध्यवसान लक्षणा शुद्धा है। यहाँ भी पूर्व संदर्भ की संगति के अनुसार "कार्य-कारणभावादिसम्बन्धपूर्वे आरोपाध्यवसाने लक्षणे" ऐसा पाठ उचित है। यहाँ यह शंका हो सकती है कि सारोपा और साध्यवसाना लक्षणाओं के नाम है न कि आरोप एवं अध्यवसान। इसका उत्तर है कि यहाँ बहुव्रीहि समास है आरोप एवं अध्यवसान है जिसमें ऐसी लक्षणाएँ। दूसरा उत्तर है कि पूर्व में "इमावारोपाध्यवसानरूपौ सादृश्य हेतू भेदौ" ऐसा पाठ ग्रन्थकार सादृश्यहेतुक इन्हीं भेदों को बतलाते समय लिख चुके है अतः प्रकृत में कार्यकारणभावसम्बन्धहेतुक इन्ही भेदों को बतलाते समय भी वैसा ही लिखना उचित हैं।

यहाँ गौणी लक्षणा के भेदों में से सारोपा के भेद वाहीक गौ है में भेद रहने पर भी अर्थात् वाच्यार्थ बोध की वेला में वाहीकत्व एवं गोत्व रूप विभिन्न धर्म प्रकारक उपस्थिति होने पर भी सादृश्य की महिमा से ताद्रूप्य की प्रतीति प्रयोजन है और साध्यवसाना के भेद यही गौ है में सर्वथा ही अर्थात् वाच्यार्थ बोध वेला में भी शब्द के द्वारा भेदक धर्मों की उपस्थिति के नहीं होने से अभेद का अवगम प्रयोजन है। शुद्ध भेदों में से सारोप भेद घी आयु है में अन्य दूध बादाम वगैरह की अपेक्षा विलक्षणता से और यही आयु है इस साध्यवसाना के भेद में अव्यभिचार से आयुरूपी कार्य की कारिता आदि प्रयोजन है। जहाँ सारोपा में कार्य का कारण से भेद मालूम पड़ता है वहाँ व्यभिचार की सम्भावना हो सकती है अतः अन्य वैलक्षण्य है व्यभिचार नहीं है। किन्तु साध्यवसाना में भेद के नहीं मालूम पड़ने से प्रत्युत अभेद के मालूम होने से कथमपि व्यभिचार की शंका नहीं है। आयुरे-वेदम् इसको एवेदम् न बोलकर "आयुरिदमेव" ऐसा बोलना चाहिए। या फिर विधेया-विमर्श को हटाना अभीष्ट हो तो इदमेव आयुः बोलना चाहिए। कहने का सारांश इतना ही है कि एव का अन्वय इदं पद के साथ करना चाहिए। कार्यकारणभावादिगत

द्योस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि। क्वचित् तादर्थ्यादुपचारः, यथा–इन्द्रार्था स्थूणा इन्द्रः। क्वचिद् स्वस्वामिभावाद्, यथा–राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावाद्, यथा–अग्रहस्त इत्यत्रग्रमात्रेऽवयव हस्तः। क्वचित् तात्कर्म्याद्, यथा-अतक्षा तक्षा।

लक्षणा तेन षड्विधा ॥ १२ ॥

## बालक्रीड़ा

आदि पद से सम्बन्धों को ही ग्राह्य कहते हैं कि कहीं पर तादर्थ्य रूप सम्बन्ध से उपचार आरोपा होता है जैसे इन्द्र के निर्माण के लिए लाई गई स्थूणा काष्ठ को इन्द्र कहते हैं। पूजनीयत्व व्यंग्य है। कहीं पर स्व सेवक और स्वामी मालिक भावरूप सम्बन्ध से जैसे राजा का सेवक है उसको राजा कहते हैं। अनुल्लंघ्याज्ञत्व व्यंग्य है। कहीं पर अवयवावयविभाव सम्बन्ध से जैसे अग्रहस्त इसमें अग्रमात्र अवयव पहुँचे या कर या अंगुली को हाथ कहते हैं। किसी का पहुँचा या कर या अंगुली कटी हुई पड़ी है उसको देखकर हाथ कट गया कहते हैं। यहाँ रूढि है प्रयोजन कुछ नहीं है। कहीं पर तात्कर्म्य यानी दूसरे के कर्म को दूसरा करने लगे तत्कर्मकारित्वरूप सम्बन्ध से जैसे जो बढई नहीं है उसे बढई कहते हैं उस क्रिया में अभी दक्ष नहीं है व्यंग्य है। कहीं पर तात्स्थ्य यानी उस में या उस पर रहने रूप सम्बन्ध से जैसे घर में रहने के कारण ( गृहा दाराः। न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ) दारा को घर कहते हैं। नियतस्थितिकत्व व्यंग्य हैं। मंच पर रहने से बालक को मंच कहते हैं मंच चिल्लाते हैं। ताद्धर्म्य उसके धर्म से जैसे माणावक सिंह है अग्नि है। असहनशीलता व्यंग्य है। तत्साहचर्य से जैसे कुन्त घुस रहे हैं लकड़ियाँ चलती हैं छत्तेवाले जाते हैं। ओ लकडी ओ दही इत्यादि यहाँ पर व्यंग्य आवश्यकतानुसार है। यहाँ एक श्लोक है। तात्स्थ्यात् स्वस्वामिभावाच्च सामीप्यात् धर्मकर्मतः। तत्साहचर्यात्तादर्थ्यात् तदीयत्वाच्च लक्षणा। तदीयत्व तदवयवत्व है।

इस तरह लक्षणा छ प्रकार की है। आद्य भेद भी इनके साथ में है। उपादान लक्षणा लक्षणलक्षणा, सारोपा और साध्यवासना ये चार शुद्धा लक्षणा के भेद हैं और केवल सारोपा और साध्यवसाना गौणी लक्षणा के भेद हैं।

यहाँ जो छ प्रकार की लक्षणा बतलाई गई है वही लक्षणा रूढि में व्यंग्य से रहित है और प्रयोजन में व्यंग्य के सहित है। क्योंकि प्रयोजन व्यञ्जन व्यापार से ही गम्य है। जाना जा सकता है। यहाँ का आशय यह है कि कर्म में कुशल है, गंगा में घोष है इत्यादि आरम्भ से लेकर अतक्षा तक्षातक जितने भेद या उदाहरण बतलाये हैं वे सर्व साधारण में रात दिन के व्यवहार में प्रचलित हो गये हैं अतः इनका रूढि में भी और प्रयोजन में भी व्यवहार कर सकते हैं। जैसे कोई अनिर्दिष्ट नामवाला व्यक्ति गो तरकारी या दही वगैरह को ले जा रहा है उसको यदि पुकारना ही है या मार्ग में चलते हुए को हटने

आद्यभेदाभ्यां सह । सा च

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।
( प्रयोजनं व्यंग्यमेव )

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।।

तच्च गूढमगूढं वा—( गूढागूढोभयं नु तत् )

मधुसूदनी

तच्च गूढमगूढं वेति । अत्र गूढमेकम् । अगूढं द्वितीयम् । वापदेन तृतीयं गूढागढोभयात्मकम् । इदमेव तृतीयं व्यंग्यमर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोरविवक्षितवाच्यध्वनेर्भेदयोरुपयोगि । अत एव प्रसिद्धिः—

बालक्रीड़ा

बढ़ने के लिए कहना है या उस को काम बतलाना इत्यादि है वह बिना प्रयोजन से बिना मतलब से या किसी मतलब से प्रयोजन से किया जाता है । जैसे अरे बैल ओ तरकारी ओ दही ये सब साध्यवसाना के उदाहरण है । इनमें केवल संकेत ही उनको करना है जिससे वे ठहर जाय प्रकृतिस्थ हो जाय या इधर देखें और तरकारी लेने वाला तरकारी लेले बस । अतः यह शंका नहीं करना कि ये उक्त उदाहरण अधूरे हैं । क्योंकि कर्म में कुशल हैं यह रूढि का उदाहरण लिखा है किन्तु जो तो क्रियावान् है वही कुशल है वही विद्वान् है । अर्थात् जो क्रियावान् नहीं है वह मूर्ख है । वैद्य को कहा जाता है कि ( पीयूषपाणिः कुशलः क्रियासु ) यह पीयूषपाणि है इनका हाथ अमृत है जिसको छू देते हैं वह जी जाता है । और क्रिया में कुशल है यशस्वी है । हस्त क्रिया में कुशल है आपरेशन करने में इसका हस्तलाघव है हाथ बड़ा हल्का है इत्यादि और "योगः कर्मसु कौशलम्" कर्म में कौशल योग है अर्थात् योगी वही है जो कर्म में नेती धोती आसन प्राणायाम वगैरह में शिक्षित है अन्यथा योगी नामधारी है इत्यादि कितने व्यंग्य है । अतः ये उक्त सब भेद रूढि के भी हैं और प्रयोजनवती के भी हैं, यह स्पष्ट हो गया । प्रयोजन व्यंग्य ही होता है क्योंकि प्रजोजनं हि व्यञ्जनाव्यापारेणैव गम्यम् कहने का आशय ही यह है कि प्रतिभाशाली को ही इनमें विलक्षणता दिखाई देगी अन्य को नहीं । व्यंजना ज्ञान रूपा वृत्ति है जो प्रतिभा ही है । अत एव प्रतिभा और व्यंजना पर्याय हैं यही अभिनव गुप्त का सिद्धान्त है। चक्षुरुन्मीलन का रहस्य यही है । अस्तु ।

वह प्रयोजन तीन प्रकार का है । गूढ अस्फुट १ अगूढ स्फुट २ और गूढागूढोभयात्मा ३ । यहाँ वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये इस विश्व कोष के अनुसार समुच्चयार्थक वाकार है । अतः इससे गूढागूढोभयात्मा तीसरा भेद भी ग्राह्य है अन्यथा "अगूढमपरस्याङ्गं वाच्य सिद्ध्यंगमस्फुटम्" के अनुसार अगूढ स्फुट और गूढ अस्फुट गुणीभूत व्यंग्य ही प्रयोजनवती लक्षणा के भेदों में परिगृहीत होंगे । अर्थान्तर संक्रमितवाच्य

तदिति व्यङ्ग्यम्। गूढं यथा—

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जघनमंसवन्धोद्धुरं
वतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

## मधुसूदनी

नान्ध्रीपयोधर इवातितरां प्रकाशः (अगूढः)
नो गुर्जरीस्तन इवातितरां निगूढः (अस्फुटः)
अर्थो गिरामपिहितः पिहितश्च (गूढगूढोभयात्मा)
कश्चित् सौभाग्यमेति मरहट्ट वधूकुचाभः॥

## वालक्रीड़ा

एवं अत्यनातिरस्कृतवाच्य ध्वनियां लक्षणामूला नहीं हो सकेगी। यहाँ मूलकारिका में तच्च के तत् पद का अर्थ है व्यंग्य। गूढ व्यंग्य जैसे।

"मुखम्"। इन्दुवदना चन्द्रमुखी के तनु कृश शरीर में तरुणिमा जवानी का उद्गम प्रादुर्भाव मोद कर रहा है वढ़ रहा है। इन्दुके जैसा वदन जिसका हो वह इन्दु वदना है। यहां वदन में इन्दु का साहश्य पूर्ण रूप से उपपन्न है। क्यों कि जो अपनी पोषक किरणों से विश्व को क्लिन्न सरस कर देता है वह इन्दु है। उन्दी क्लेदने से इन्दु शब्द बनता है। मुख भी ठीक वैसा ही है। महतां परिचय एव गौरवाय महान् का परिचय ही गौरवाधायक होता है अतः एक तो यह इन्दु वदना जो स्वभावतः विश्व को सरस बना देती है उसमें फिर युवकों को मस्त कर देने वाली तरुणिमा की लुनाई। अहो युवकों को भाग्य से यह चक्षुः सुख प्राप्त हो रहा है। जिससे ताप को उप शमन करने वाली संजीवनी जड़ी का कार्य हो रहा है। क्यों कि उद्गम अंकुरादि धर्म है। वह तरुणिमा में अनुपपन्न है। जो उद्गमशाली होता है वह कुछ उद्भिन्न होता है। अतः उद्गम शब्द का मुख्य अर्थ उद्गम जो बाधित होकर लावण्यातिशय को व्यक्त करता है। मोदते में मोद चेतन का धर्म है। जो मुदित होता है वह हृष्ट रोमहर्ष से युक्त होता है। ऐसा रोमहर्ष रूप मुख्य अर्थ बाधित हुआ तरुणिमा की साहजिकता को व्यक्त करता है। अब मोद की विशेषताओं को बतलाते हैं। मुख विकासशील स्मितसे सम्पन्न है। किन्तु विकास पुष्प का धर्म है जो स्मित में अनुपपन्न है। क्योंकि जो विकसित होता है वह कान्ति सम्पन्न होता है। अतः वाधितमुख्यार्थ विकसित शब्द कान्ति सम्पन्नता को लक्षित करता हुआ आकर्षकत्व को व्यक्त करता है। नायिका का प्रेक्षण ताकना ऐसा है जिसने वक्रिमा को वश में कर रखा है। यहां वशीकरण चेतन का धर्म है। यह वक्रिमा में अनुपपन्न है क्यों कि जो जिस के वश में होता है वह उसके अधीन हो जाता है। अतः वशित शब्द बाधित मुख्यार्थ हुआ जिधर २ नायिका ताकती है

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १० ॥

अत्रोपदिशतीति ।

## मधुसूदनी

अन्यथा तृतीयभेदास्वीकारे "अगूढमपरस्यांगं वाच्यसिध्यंगमस्फुटमि" ति रीत्या गुणीभूतव्यंग्यभेदयोः गूढस्यागूढस्यैव कृते लक्षणा स्यान्न तृतीयस्य कृते कोऽपि कुत्रापि कथमप्यवसरः स्यात् ।

## बालक्रीड़ा

उधर २ युवक उसका अनुसरण करते हैं। यह व्यक्त होता है। नायिका की गति (चाल) ऐसी है जिसमें विभ्रम श्रृंगार उछलते हैं। यह उछलना जल का धर्म है। वह विभ्रम में अनुपपन्न है। क्यों कि जो उछलता है उसमें तरंगे आती है अतः बाधितमुख्यार्थ उच्छलन शब्द उत्कल्लोल का सादृश्य विभ्रम में लक्षित करता हुआ अपनी प्रौढि से युवजनाभिलषणीयत्व को व्यक्त करता है। नायिका की मति ने मर्यादा को त्याग दिया है। यह अपासन दूरीकरण चेतन का धर्म है। वह अमूर्त मति में अनुपपन्न है। क्यों कि जो दूर किया जाता है वह उसका नहीं होता है अतः बाधितस्वार्थ अपासन शब्द मर्यादा में परिवर्तन को लक्षित करता हुआ अधीरता को व्यक्त करता है। नायिका के स्तन मुकुलित हैं कलिके आकार वाले हैं। मुकुलित होना कुसुमों का धर्म है। वह स्तनों में अनुपपन्न है। जो मुकुलित होता है वह कुछ उद्भिन्न होता है अतः बाधित कलिरूप मुख्यार्थ वाला मुकुलित शब्द स्तनों में अभिनव उद्भेद को लक्षित करता हुआ आलिंगन की योग्यता को व्यक्त करता है। ये व्यंग्य कुशाग्रबुद्धि के ही हृदय में स्फुरित होते हैं जो सहृदय के लिए भी कष्ट संवेद्य हैं। अतः गूढ हैं।

अगूढ व्यंग्य जैसे—"स्त्रीपरिचयात्"। यहाँ स्त्रीपरिचयात् पाठ है। क्योंकि—

देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः ।
अनेक शास्त्राद्यवलोकनं च चातुर्यमूलानि भवन्ति पंच ।

इस प्राचीन उद्भटश्लोक के अनुसार चातुर्य का मूल वाराङ्गना का परिचय है। श्री के परिचय का चातुर्य के मूल के रूप में निर्देश नहीं है। सर्वे गुणाः काञ्चन माश्रयन्ति। का अर्थ है कि गुणों से रहित धनिक को भी चापलूस लोग सर्व गुण सम्पन्न कहने लगते हैं बस। वाराङ्गनाओं के परिचय से संसर्ग से जड़ लोग विदग्धों के चरित के जानकार हो जाते हैं। ठीक ही है यौवन की मस्ती ही कामिनियों को लालित्य का उपदेश देती है। यहां उपदिशति इससे आविष्कारण प्रकाशन लक्षित होता है। क्योंकि परप्रवर्त्तनारूप उपदेश चेतन का धर्म है जो अचेतन यौवन मद में बाधित है। बाधित हुआ

उभयं यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्।

तदेषा कथिता त्रिधा ॥ १२ ॥

अव्यङ्ग्या सव्यङ्ग्या च।

तद्भूर्लाक्षणिकः—

शब्द इति सन्बध्यते, तद्भूस्तदाश्रयः।

### मधुसूदनी

तद्भूर्लाक्षणिक इति। तद्भूः तस्याः त्रिधा कथितायाः लक्षणायाः भूः भूमिराश्रयो लाक्षणिकः शब्दः। एवं च तद्भूर्लाक्षणिकस्तत्र व्यापारो व्यञ्जनात्मकः इत्येवमेकस्मिन् वाक्ये तद्भूर्लाक्षणिकस्तत्र इत्येवं पाठे पूर्वपरामर्शक तच्छब्दस्य तत्रेत्यस्य लाक्षणिके शब्दे व्यञ्जनात्मको व्याप.र इत्येव समन्वयो

### बालक्रीड़ा

वह प्रकाशन को लक्षित करता है जिससे स्वतः हाव भाव हेला एवं लीलाओं का ज्ञान व्यक्त होता है। यह सर्वजन संवेद्य होने से अगूढ है स्फुट है।

गूढागूढोभयव्यङ्ग जैसे—तुमको मैं उपदेश देता हूँ। यहाँ विद्वानों को समुदाय है अतः अपनी मति को सुस्थिर करके यानी सावधान होकर यहाँ बैठना।

इस प्रकार यह लक्षणा दो प्रकार की कही गई है। एक अव्यंग्या रूढि। दूसरी सव्यंग्या प्रयोजनवती। यहाँ त्रिधा यह पद असंगत है क्योंकि पहिले लक्षणा के लक्षण में रुढ़ितोऽथ प्रयोजनात् इस तरह अन्य हेतुओं के साथ विकल्पक के रूप में रूढि और प्रयोजन दो का निरूपण किया है। और फिर अन्त में व्यंग्येन रहिता रूढौ सहिता तु प्रयोजने इस कारिका के द्वारा भी व्यंग्य का अभाव एवं व्यंग्य का सद्भाव यानी भाव और अभाव दो को ही दिखाया। अतः अव्यंग्या के जोड़ में सव्यंग्या ही पाठ ठीक है अतः द्विधा पाठ उचित करता है। यदि व्यंग्य को लेकर भेदों को दिखायेंगे तो चतुर्धा पाठ करना होगा। क्योंकि गूढ अगूढ एवं गूढागूढ ये तीन प्रकार के व्यंग्य हैं और चतुर्थ प्रकार अव्यंग्य का होगा।

"तद्भूः"। उसका भू लक्षणिक है। प्रश्न—सूत्र के तद्भूः और लक्षणिकः इन पदों का क्या अर्थ है। उत्तर। "स्याद्वाचको लक्षणिकः शब्दः" इस सूत्र में उक्त शब्दः पद यहाँ सम्बन्ध करता है। और तद्भूः पद का अर्थ है तदाश्रय। इसमें भी कहे हुए तत् शब्द का अर्थ है "तदेषा कथिता" में एषा पद से निर्दिष्ट लक्षणा। अतः लक्षणा का आश्रय शब्द लाक्षणिक है।

## मधुसूदनी

न तु तदतिरिक्तः। स च अशुद्ध एव। यतो हि लाक्षणिके शब्दे तद्भूर्लाक्षिणिक इत्युक्त्या तच्छब्देन लक्षणैव व्यापारो गृह्यते न तु व्यञ्जना। निर्दिष्टा व्यञ्जना तु व्यंग्यविषये भवति। अग्रे यस्य प्रतीतिमाधातुमित्यत्र उच्यतेऽपि फले व्यञ्जनान्नापरा क्रियेति। अतोऽत्रेत्थं पाठः साधीयान् तद्भूर्लाक्षणिकः,

## बालक्रीड़ा

फल में व्यञ्जजनात्मक व्यापार है। अब यहाँ प्रश्न होता है कि तत्र पद से किसको लिया जाय। प्रश्न होने का कारण है कि बुद्धिस्थत्वावच्छिन्न में तत् शब्द की शक्ति है। बुद्धिस्थ संसार हो सकता है। किन्तु सिद्धान्त है कि पूर्व प्रक्रान्त अनुभूत एवं प्रसिद्ध बुद्धिस्थ को ही लेना चाहिए। फिर प्रश्न होता है कि किस पूर्व प्रक्रान्त को लेना। व्यवहित पूर्व या अव्यवहित पूर्व प्रक्रान्त को उन में व्यवहित पूर्व "तच्च गूढमगूढं वा" में प्रोक्त तत्पदार्थ को लें तो समन्वय हो सकता है किन्तु उसको ले नहीं सकते। क्योंकि उसके बाद बीच में "तदेषा कथिता" से बोधित विषयान्तर लक्षणा और तद्भूर्लक्षिणिकः से बोधित विषयान्तर लाक्षणिक शब्द से उस तत् पदार्थ का सम्बन्ध विच्छिन्न हो गया है। अतः उसका अनुवर्त्तन नहीं हो सकता है। अतः यदि अव्यवहित पूर्व प्रक्रान्त को लें तो वह है लाक्षणिक, उसके लेने में अशुद्धि हो जाती है। क्योंकि उसमें तद्भूः के तत् पद से लक्षणा व्यापार को बतला चुके है। तब उसमें व्यंजना व्यापार कैसे रहेगा। व्यंजना व्यापार व्यंजक शब्द में रहेगा न कि लाक्षणिक शब्द में। यही सिद्धान्त है। अतएव आपने भी "स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यंजकस्त्रिधा" इस तरह अलग २ तीन शब्दों का निरूपण किया है। जो अभिधा लक्षणा एवं व्यंजना इन तीन शक्तियों के पृथक् २ आश्रय हैं। यह बात अपनी जगह में पृथक् है कि वही गंगा शब्द प्रवाहको प्रतिपादन करते समय वाचक है तीर को प्रतिपादन के रिश्ते में लाक्षणिक है और शैत्य पावनत्वादि के बोधन क्षण में व्यंजक है। किन्तु जिस क्षण में उसमें समय है या लक्षणा है उसी समय उसमें व्यंजना भी रहे यह सिद्धान्त नहीं है। अतः तद्भूर्लाक्षणिकः के तत्काल बाद "फले पाठ है तत्र यह पाठ नहीं है। व्यापारो व्यंजनात्मकः" यह पंक्ति स्थान भ्रष्ट है। इसका स्थान है तत्कुतः इस वृत्ति के पूर्व में। क्यों कि यदि इस वृत्ति के पूर्व में इसका स्थान नहीं मानेंगे तो इस वृत्ति का मूल कौन। मूल के अक्षरों को स्फुट करने के लिए ही वृत्ति या विवरण किया जाता है अन्यथा अमूल लेख हो जायगा। क्योंकि सिद्धान्त है नामूलं लिख्यते किञ्चित् नानपेक्षितमुच्यते। अतः यहाँ ऐसा करना चाहिए जिससे पूर्वापर का सब प्रसंग सुस्पष्ट हो जाय और अपसिद्धान्त भी नहीं होवे। वह पाठ है—

प्रयोजनं व्यङ्ग्यमेव गूढागूढोभयं नु तत्।
तदेषा कथिता द्वेधा, तद्भूर्लाक्षणिकः, फले ॥

ऐसा पाठ मानने पर "व्यंग्येन रहिता रूढौ सहिता तु प्रयोजने" के बाद उल्लिखित

फले ।

व्यापारो व्यञ्जनात्मकः । कुत इत्याह—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिः, अपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथा हि—

## मधुसूदनी

फले इति मूले व्यापारो व्यञ्जनात्मकः इति तद्वृत्तौ च। इदन्तु बोध्यम् । इदं रजतमितिवत् गंगायां घोष इत्यत्रापि अतस्मिन् तद्बुद्धिः परमेकत्र भ्रान्तिरपरत्र

## बालक्रीड़ा

उक्त वृत्ति तथा तच्च गूढमगूढं वा के बाद उल्लिखित तच्चेति व्यंग्यम् वृत्ति भी अमूल नहीं होगी । इस तरह पूर्वापर के ग्रन्थ की संगति हो गई तथा "तच्च गूढमगूढं वा" कहने से जो गुणीभूतव्यंग्य के ही भेद (अगूढमपरस्याङ्गं वाच्यसिध्यङ्गमस्फुटम्) अगूढ एवं अस्फुट का संकेत मिलता था और लक्षणामूलध्वनि के लिए अपेक्षित गूढागूढोभय रूप के नही मिलने से जो अपसिद्धान्त हो रहा था वह भी दूर हो गया । इसके सिवाय तदेषा कथिता त्रिधा में त्रिधा के कहने से आई हुई असंगतिका भी निवारण हो गया । और "तत्र व्यायापारो व्यंजनात्मकः" इस मूल के उल्लेख के कारण होने वाली अस्त व्यस्यता भी दूर हो गई । "फले" इस मूल का समन्वय भी हो गया जो व्यापारो व्यंजनात्मकः इस वृत्ति के लिए अपेक्षित है ।

इसके सिवाय "फले शब्दैकगम्ये" के फले पद के लिखने के लिए भूमिका भी बन जाती है । उस फल के विषय में व्यंजना व्यापार क्यों हैं इसके उत्तर में कहते हैं "यस्य" । जिसकी प्रतीति करने के लिए लक्षणा की उपासना करते हैं अर्थात् तट में शैत्यादिकी प्रतीति के लिए गंगा तटे घोषः इस मुख्य तट शब्द को न कहकर अमुख्य गंगा रूप लाक्षणिक शब्द का प्रयोग किया है वह फल गंगा शब्द ही से गम्य है अतः इस फल के विषय में व्यंजना के सिवाय अपर कोई व्यापार नहीं है ।

प्रयोजन के प्रतिपादन करने की इच्छा से जहाँ लक्षणा के द्वारा अमुख्य शब्द का प्रयोग करते हैं वहाँ अमुख्य शब्द के सिवाय अन्य किसी से उस प्रयोजन की प्रतिपत्ति नहीं होती है अपितु उसी शब्द से होती है और उस प्रयोजन के विषय में व्यंजना के विना अपर कोई क्रिया व्यापार नहीं है ।

"तथाहि" । अन्य व्यापारों के अभाव को दिखाते हैं । अभिधा शैत्यपावनत्वादि

**नाभिधा समयाभावात्—**

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः संकेतिताः।

**हेत्वाभावान्न लक्षणा ॥ १५ ॥**

मुख्यार्थबाधादित्रयं हेतुः।

तथा च—

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ १६ ॥**

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, तद्वत् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः, नाप्यत्र बाधः, न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनं, नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः।

### मधुसूदनी

न। तत्र हेतुर्विवेकाविवेकौ। इदं रजतमित्यत्र विवेकाभावः स्वरसतः प्रवृत्तिः। गंगायां घोष इत्यत्र विवेकः। अत एव कूपे गर्गकुलम् गंगायां गावश्चरन्तीत्यादौ न लक्षणा इति पातञ्जलभाष्योक्तेः।

### बालक्रीड़ा

को नहीं कह सकती है क्योंकि शैत्यादि के विषय में समय संकेत नहीं है। गंगा में घोष है इत्यादि उदाहरणों में जो पावनत्वादि धर्म तटादि में प्रतीत होते हैं उन पावनत्वादि के विषय में गंगादि शब्द संकेतित नहीं है।

उन धर्मों का लक्षणा भी नहीं प्रतिपादन नहीं कर सकती हैं क्योंकि हेतुओं का अभाव है। प्रश्न—हेतु कौन है। उत्तर। मुख्यार्थबाध मुख्यार्थ सम्बन्ध एवं रूढि प्रयोजनान्यतर ये तीन लक्षणा के अर्थ प्रतिपादन में हेतु है।

"तथा च"। मुख्यार्थबाधादित्रय हेतु प्रकृत में क्यों नहीं है उसको दिखाते है। लक्ष्य मुख्य नहीं है। मुख्य बनने वाले तटरूप लक्ष्य में बाध भी नहीं है। इस लक्ष्य के साथ फल का कोई सम्बन्ध नहीं है। और प्रयोजन को लक्ष्य मानकर लक्षणा करने के लिए दूसरा कोई प्रयोजन भी नहीं है। इसके सिवाय अमुख्य शब्द की गति प्रतिपादन सामर्थ्य स्खलित नहीं है। जैसे गंगा शब्द प्रवाह के विषय में अर्थत् घोष के साथ प्रवाह का अन्वय नहीं होने से सबाध है। अतः तट को लक्षणा से बतलाता है। उसी तरह यदि तट के विषय में सबाध हो तब प्रयोजन को लक्षित करें। किन्तु तट मुख्य अर्थ नहीं है। न उसमें बाध है। न गंगाशब्द के मुख्य अर्थ बने हुए तट का पावनत्वादि लक्षणीय धर्मों के साथ कोई सम्बन्ध है। न प्रयोजन को लक्ष्य मानने में कोई

**एवमप्यनवस्था स्याद् या मूलक्षयकारिणी**

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण तदपि प्रयोनान्तरेणेति प्रकृताऽप्रतीतिकृद् अनवस्था भवेत्।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा, तत्किं व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लणीयं न युज्यते ॥ १७ ॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

## मधुसूदनी

"ज्ञानस्य" इतीयं कारिका ज्ञानसम्बन्धिनोः कार्यकारणयोर्भेदं वोधयितुं प्रवृत्ता। यद्धि ज्ञानस्य कारणं तदेव ज्ञानस्य फलं नहि भवति। एवं च तयोर्भेदः। अयं घट इत्याकारकज्ञानस्य कारणं घटो ज्ञानस्य विषयः। तेन यथा यो घटो ज्ञानस्य कारणं स एव घटः ज्ञानस्य फलं नास्ति तथा यत् पावनत्वविशिष्टं तटमित्यत्र विशेषणीभूतं पावनत्वं लक्षणाज्ञानस्य विषयः (विषयहेत्वोरेकत्वमेव)

## वालक्रीड़ा

अन्य प्रयोजन है। और न गंगा शब्द तट की तरह प्रयोजन को प्रतिपाद न करने में असमर्थ है।

प्रयोजन को लक्ष्य मानने में कोई प्रयोजन नहीं है फिर भी यदि अन्य किसी प्रयोजन को हेतु कोटि में मानकर एक किसी प्रयोजन की प्रतीति लक्षणा से करेंगे तो हेतु कोटि में निविष्ट प्रयोजन की प्रतीति किसी से करेंगे। यदि फिर किसी अन्य प्रयोजन को हेतु कोटि में रखकर पूर्व में हेतु कोटि निविष्ट प्रयोजन की प्रतीति के लिए लक्षणा करेंगे तो इस हरह अनवस्था हो जायगी। जो मूल का क्षय करने वाली होगी। क्योंकि इस तरह भी अगर अन्य को प्रयोजन वना करके प्रथम प्रयोजन की लक्षणा से प्रतीति करेंगे। तब इस प्रयोजनान्तर के लिए फिर प्रयोजनान्तर अपेक्षित होगा इस तरह प्रकृत की प्रतीति को नहीं होने देनेवाली अनवस्था हो जायगी।

इस पर कहते हैं कि हमारे पास एक उपाय है जिससे अनवस्था नहीं होगी। वह यह है कि प्रयोजन को अलग लक्ष्य नहीं बनायेंगे किन्तु पावनत्वादि धर्म रूप प्रयोजन से युक्त तट में लक्षणा करेंगे। प्रश्न—इससे क्या प्रयोजन सिद्ध होगा। उत्तर। गंगा के तट पर घोष है इस मुख्य शब्द की अपेक्षा अधिक अर्थ की प्रतीति होना ही प्रयोजन है। अतः विशिष्ट में लक्षणा मान लेंगे व्यंजना की कोई आवश्यकता नहीं है। इस पर कहते हैं कि प्रयोजन के सहित लक्षणीय युक्त नहीं है। क्यों? ऐसा क्यों होता है।

प्रत्यक्षादेर्नीलादिर्विषयः फलं च प्रकटता संवित्तिर्वा ।

**विशिष्टे लक्षणा नैवम्**

व्याख्यातम् ।

**—(३१) विशेषाः स्युस्तु लक्षिते ॥ १८ ॥**

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधा–तात्पर्य–लक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यंजन–ध्वनन–द्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ।

एवं लक्षणामूलं व्यंजकत्वमुक्तमभिधामूलं त्वाह—

**(३२) अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १९ ॥**

### मधुसूदनी

तदेव पावनत्वं हेतुत्वात् तज्जज्ञानस्य फलं नहि भवितुमर्हति कार्यकारणयोः पौर्वापर्येण स्थितेः स्वरूपकालादिभेदोऽवश्यं तत्र भाव्यः ।

### बालक्रीड़ा

इस पर कहते हैं कि इसमें यही उदाहरण है कि ज्ञान का विषय अन्य होता है और ज्ञान का फल अलग । यहाँ का आशय यह है कि कोई पूछे कि "यह घट है" इस ज्ञान की उत्पत्ति का हेतु कौन है । तब कह जाता है कि घट । अरे साहब यही घट तो इस ज्ञान का विषय है । इससे अर्थात् सिद्ध हो रहा है कि विषय ही हेतु है या हेतु ही विषय है । अतः ज्ञान का विषय कहिए या ज्ञान का हेतु कहिए । एक ही पदार्थ है दो नहीं । तब जो ज्ञान का विषय है हेतु है वही उस ज्ञान का हेतुमान् फल कैसे हो सकता है । तस्मात् ज्ञान के विषय से भिन्न ज्ञान का फल होता है । यही ज्ञान के विषय और फल में भेद है । जैसे नीलादि गुण घटादि द्रव्य प्रत्यक्षादि ज्ञान के विषय हैं । और ज्ञान का फल संवित्ति है नैयायिकों के मत में और प्रकटता है मीमांसकों के मत में । संवित्ति का आकार है घट को मैं जानता हूँ । और प्रकटता का स्वरूप है घट को मैंने जान लिया । घटमहं जानामि घटज्ञानवानहम् यह बोध संवित्ति नैयायिकों के यहाँ हैं । घटो मया ज्ञातः यह ज्ञातता प्रकटता मीमांसकों के यहाँ होता है । यही फल है । इसलिए विशिष्ट में लक्षणा नहीं होती है । क्यों विशिष्ट में लक्षणा नहीं होती है इसकी व्याख्या कर दी गई है ।

किन्तु वे विशेष लक्षित यानी लक्षणा से प्रतिपाद्य में रहते हैं । तटादि में जो विशेष पावनत्वादि हैं वे अभिधा तात्पर्य एवं लक्षणा से भिन्न व्यापार से गम्य है जो व्यापार व्यञ्जना ध्वनन एवं द्योतन आदि शब्दों का वाच्य है और अवश्य एषणीय है चाहने के लायक है ।

इस तरह लक्षणा मूल व्यंजना को कह कर अभिधा मूल व्यंजना को कहते हैं

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

सशङ्खचक्रो हरिः। अशङ्खचक्रो हरिरित्युच्यते। राम-लक्ष्मणाविति दाशरथी। रामार्जुनगतिस्तयोरिति भार्गव-कार्त्तवीर्ययोः। स्थाणुं भज भवच्छिदे इति हरे। सर्वं जानाति देव इति युष्मदर्थे। कुपितो मकरध्वज इति कामे। देवस्य पुरारातेरिति शम्भौ। मधुना मत्तः कोकिल इति वसन्ते। पातु वो दयितामुखमिति साम्मुख्ये। भात्यत्र परमेश्वर इति राजधानीरूपाद्देशाद्राजनि।

बालक्रीडा

"अनेकार्थस्य"। अनेक अर्थ वाले शब्द के वाचकत्व माने अभिधा के संयोगादि के द्वरा नियन्त्रित हो जाने पर जो वाच्य अर्थ से भिन्न अर्थ की प्रतीति कराती है वह शब्द की व्याप्तृति शब्दनिष्ठ व्यापार अंजना है शाब्दी व्यञ्जना है। यहाँ शब्दस्य की आवृत्ति होती है।

संयोगाद्यैः इसमें उक्त आद्यपद के अर्थ का निरूपण करते हुए वाचकत्व के नियन्त्रण के विषय में आचार्य भर्तृहरि की सम्मति को उद्धृत करते हैं।

संयोग १ वियोग २ साहचर्य ३ विरोधिता ४ अर्थ ५ प्रकरण ६ लिङ्ग ७ अन्य शब्द की सन्निधि ८ सामर्थ्य ९ औचिती १० देश ११ काल १२ व्यक्ति १३ स्वर १४ और आदि से ग्राह्य पात्र १५ अवस्था १६ एवं अभिनय १७ ये शब्द के अर्थ के विषय में अनवच्छेद अनिश्चय अर्थात् कौन सा अर्थ यहाँ विवक्षित है ऐसा सन्देह होने पर विशेष विवक्षित अर्थ की स्मृति ज्ञान के जनक हैं।

इस भर्तृहरि के कहे हुए मार्ग से सशंखचक्रो हरिः इससे शंखचक्र का संयोग अनेकार्थक हरि शब्द की अभिधा का अच्युत अर्थ में नियमन करता है। इसी तरह शंख-चक्र का वियोग उक्त नियमन करता है। राम और लक्ष्मण इसमें इन दोनों का साहचर्य ३ दशरथ के पुत्र रूप अर्थ में इन दोनों की अभिधा का नियमन करता है। युद्ध में जूझने वाले उन दोनों की क्या गति दशा हुई इस प्रश्न के उत्तर में कहते हैं कि उनकी दशा राम एवं अर्जुन की तरह हुई। इसमें विरोध ४ राम की अभिधा का भार्गव में और अर्जुन की अभिधा का कार्त्तवीर्य सहस्रबाहु में नियमन करता है। भव संसार के छेदन के लिए स्थाणु का भजन करो इसमें अर्थ ५ भवच्छेदन रूप प्रयोजन स्थाणुशब्द की अभिधा का हर अर्थ में नियमन करता है। देव सब जानते हैं इसमें प्रकरण ६ वक्ता एवं श्रोता के हृदय में स्थित भाव देव शब्द की अभिधा का युष्मदर्थ में नियमन करता है। मकरध्वज कुपित है इसमें लिंग ७ चिह्न मकरध्वज पद की काम में। पुरों के दुश्मन देव इसमें पुरारति शब्द की सन्निधिदेव शब्द की शम्भु भगवान् में।

चित्रभानुर्विभातीति दिने रवौ, रात्रौ वह्नौ। मित्रं भातीति सुहृदि। मित्रो भातीति रवौ। इन्द्रशत्रुरित्यादौ वेद एव न काव्ये, स्वरो विशेषप्रतीतिकृत्॥

## मधुसूदनी

इन्द्रशत्रुरित्यादौ वेदे एव न काव्ये स्वरो विशेषप्रतीतिकृदिति अत्रानेकार्थस्य शब्दस्येति कारिकाया उपोद्बलनप्रसंगे समुद्धृतस्य संयोगो विप्रयोगश्चेति हरिवचनस्य व्याख्याने स्वरादय इत्यस्य वृत्तौ, अग्रे च श्लेषालंकारनिरूपणे वृत्तौ काव्यमार्गे स्वरो न गण्यते इत्येवं यः स्वरस्य काव्यविषयतया निषेधः कृतः स चिन्तनीयः।

तथाहि—पूर्वं तूदात्तानुदात्तस्वरिता वर्णा एव न तु स्वराः। उच्चैरुदात्तः इत्यादि त्रिषु सूत्रेषु पाणिनिमहर्षिणा अच् वर्णः उदात्तादिरूपो निरूपितः। अन्यच्च भरतीये नाट्यशास्त्रेऽपि सप्तदशाध्याये नवोत्तरशततमे १०९ श्लोकेऽपि उदात्तादयो वर्णा एव तथा—

उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा।
वर्णाश्चत्वार एवैते पाठ्ययोगे तपोधनाः!॥

इत्येवं निरूपिताः। इमे। इति स्थितिः। पश्चात्कोषकारैः तेषां स्वरनाम्ना व्यवहारः कृतः। अन्यैर्भाष्यकारैरपि तथा। परमेषामुदात्तादीनां स्वरसंज्ञया आधुनिकैः व्यवहृतानामपि काव्ये महानुपयोगः। तद्यथा—हास्यशृङ्गारयोः स्वरितवर्णैः पाठ्यमुपपाद्यम्। वीराद्भुतरौद्रेषूदात्तकम्पितैः। करुणवीभत्सभयानकेष्वनुदात्तस्वरितकम्पितैरिति। नाट्यशास्त्रे पूर्वोक्ताध्याये।

सप्तानां स्वराणां षड्जादीनां तु रसादावुपयोगः प्रसिद्ध एव। न तत्र वक्तव्यं किंचित्। काकुरपि स्वरविशेषः। तद्यथा तस्मिन्नेव नाट्यशास्त्रे

## बालक्रीड़ा

कोकिल मधु से मत्त है इसमें कोकिल मादन सामर्थ्य ९ मधु शब्द की वसन्त में। दयिता का मुख तुम्हारी रक्षा करे इसमें औचिती १० मुख शब्द की सांमुख्य में। कामाग्नि से दंदह्यमान युवक की रक्षा प्रिया की अनुकूलता पर निर्भर है। प्रिया का मुख तो हरहालत में रहेगा ही। यहाँ परमेश्वर हैं इसमें राजधानी रूप देश ११ परमेश्वर शब्द की राजा में। चित्रभानु चमकता है इसमें काल १२ दिन रूप समय चित्रभानु शब्द की सूर्य में और रात्रिरूप समय उस शब्द की वह्नि में। मित्रं भाति इसमें व्यक्ति १३ नपुंसक लिंग मित्र शब्द की दोस्त में। मित्रो भाँति इसमें पुल्लिंग मित्र शब्द की सूर्य में। स्वर माने काकु या अकारादि अच् या उदात्त अनुदात्त एवं स्वरित इनमें ये उदात्तादि, वेद वाक्य "इन्द्रशत्रुर्वर्धस्व" इत्यादि ही में न कि काव्य में विशेष अर्थ की प्रतीति करता है। इन्द्र का शत्रु शातयिता इस षष्ठी समास में अन्त शत्रु पद उदात्त

मधुसूदनी

शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्त्तते ॥ इति।

तथाभूतामिति ध्वनौ, मथ्नामि इति गुणीभूतव्यंग्ये, अलंकारे च काकुवक्रोक्ति स्थले विशेषप्रतीतिकारिणी वर्तते सा काकुः काव्येऽपि।

सुधाकरसुहृद् वक्त्रं दृष्टिः पंकजवैरिणी इति प्रदीपकारैरुदाहृते सुधाकरपंकजयोः पदयोः षष्ठीसमासे अन्तोदात्तत्वे उपमा। बहुव्रीहौ आद्युदात्तत्वे प्रतीपमिति उद्योतकारैः समाहिते च काव्ये वाच्यरूपमेव विशेषं प्रतिपादयति स्वर उदात्तादिः। एतेन स्वराः काक्वादयः उदात्तादयो वा व्यंग्यरूपमेव विशेषं प्रतिपादयन्ति नान्यवाच्यरूपमिति साहित्यदर्पणकारोक्तिः परास्ता। एकार्थनियणन्त्रणरूपं विशेषं तु दर्पणकारः किंचेत्यादिना मनुत एव तत्र न वक्तव्यम्। काव्यमार्गे स्वरो न गण्यते इत्यत्र स्वरपदेनोदात्तादिर्न गृह्यते। श्लेषप्रकरणे स्वयं मम्मटाचार्येण—

एकप्रत्नोच्चार्याणां तच्छायां चैव विभ्रताम्।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ॥

इति प्राचीनोक्तिमनुसरता भिन्नाभिन्नप्रयत्नोच्चार्याणामित्येवं तदादिरेव गृहीतः। अतः स्वरपदेनात्र अचः स्वरा इत्युक्तेरचो गृह्यन्ते। फलं च तस्य वर्णसाम्यमनुप्रासः इत्यत्र वृत्तौ स्वरविसदृशत्वेपि व्यंजनसदृशत्वं वर्णसाम्यमिति अवोचि। तथा—

पृथुकार्त्तेति पृथुकानां बालानामार्त्तस्वरस्य पात्रं पृथु बहुलं कार्त्तस्वरस्य पात्रं यत्रेति। अमित्राणां सामर्थ्यं कृन्तति मित्राणां सामर्थ्यं करोतीति दिशा अर्थभेदेन शब्दभेदो न तु वर्णभेदेन सः। अत्र हि सर्वेष्वर्थेषु वर्णानामेकस्वरूपत्वमेव। एवं वर्णैकत्वाच्च शब्दा भिन्नं स्वरूपमपन्हुवते परं स्वरभेदात् स्वरूपगतभेदस्यापह्नवाभावान्न श्लेषः स्यात्। यथा लक्ष्मीदृशो रसिकतां तन्वती तनुः लावण्यैकम-

बालक्रीड़ा

होता है। इन्द्र है शत्रु शातयिता जिसका इस बहुव्रीहि समास में आदि पद इन्द्र उदात्त है। अन्तोदात्त होने पर अन्त पद में जोर पड़ता है जिसके फलस्वरूप इन्द्र को मारने वाला वृत्रासुर यह अर्थ इन्द्र शत्रु पद का होगा और आद्योदात्त करने पर आदि पद में जोर पड़ता है जिसके कारण वृत्रासुर को मारने वाला इन्द्र है यह अर्थ उसका होगा। अगर इन उदात्तादि को काव्य में नियामक मानेंगे तो समास में श्लेषालंकार नहीं होगा और यदि अकारादि स्वरों को नियामक मानेंगे तो यमकानुप्रासादि अलंकारों के स्वरूप की निष्पत्ति में झंझट पड़ेगी। अतः केवल काक्वादि स्वर ही काव्य में विशेषाधायक हैं।

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअएहिं ॥ ११ ॥

इत्यादावभिनयादयः । इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारिते-

मधुसूदनी

ह्यानिधिः । इत्यत्र निधिरित्यस्य ह्रस्वेकारघटितत्वे एकवचनान्ततया तन्वान्वयो संगच्छते। परं नेत्रे इति द्विवचनान्तपदार्थस्यान्वये तु दीर्घेकारघटितं पदमपेक्ष्यते। तन्नोपलभ्यते । तादृशं पदं निधी रसिकेति द्वयोः सन्धौ रोरीति दीर्घेण जायते। अन्वयकरणसमये तु ह्रस्वेकारघटित एव पाठः समुपस्थास्यते तर्हि स्वर-भेदान्न श्लेषः स्यादत उच्यते काव्यमार्गे श्लेषानुप्रासादौ स्वरोऽच् न गण्यते इति सर्वं समञ्जसम् ।

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतायन्मात्रावस्था एतावन्मत्रैर्दिवसैः ।

बालक्रीड़ा

स्वरादय में आदि ग्रहण से "एद्दह" । यह किसी नायक के नायिका की विशेषताओं को सुनकर अनुरागोद्रेक में अवस्था के बारे में पूछने पर दूती की उक्ति है। हाथों का अभिनय करके कह रही है कि इतने छोटे २ स्तनों से इतने बड़े २ स्तन उसके हो गये हैं। ऐसी २ कमल की तरह खिली हुई आखें हैं इतनी ऊमर है। इतने ही दिनों में यह सब हालत वदल गई है। इत्यादि में अभिनयादि अभिधा के नियामक हैं।

इस प्रकार संयोगादि के द्वारा अर्थान्तराभिधायकत्व के निराकरण कर देने पर भी अनेकार्थक शब्द जो अर्थान्तर का प्रतिपादन कहीं पर करता है वह अभिधा के सहारे नहीं करता है क्योंकि उसका नियमन हो गया है। और न लक्षणा के सहारे क्योंकि उसके लिए अपेक्षित मुख्यार्थबाधादि का वहाँ अभाव है। अपि तु अंजन के सहारे करता है अतः अंजन ही काव्य में व्यापार है। जैसे—"भद्रात्मनः" । भद्रात्मा यानी जिसका आत्मा स्वरूप या चित्त भद्र है शोभन है। जिसके शरीर पर दुश्मन लोग चढ़ाई नहीं कर सकते हैं। विशाल वंश वाला उत्तम कुलीन तदनुसार जिसके उन्नति की ख्याति है। जिसने बाणों का आयुधों का संग्रह कर रखा है। जिसकी गति ज्ञान अबाधित है और दुष्टों का जो निराकरण करता है उस राजा का कर निरन्तर दान के जल के सेक से सुभग है। जो भद्र जाति वाला है और विशाल बाँस की तरह जो ऊँचा है अतएव ऊँचा होने से जिस पर चढ़ना मुश्किल है। भौंरे जिस पर मँडरा रहे हैं। जिसकी चाल उद्धत नहीं है ऐसे हाथी का सूँड निरन्तर बहने वाले मद जल से सुभग है। यहाँ राजा और हाथी दोनों का वर्णन है। यदि राजा वर्णनीय है प्रस्तुत है तो राजा वाच्य है और हाथी अवर्णनीय है अप्रस्तुत है तो व्यंग्य है। यही स्थिति हाथी के पक्ष में भी है। वह भी वाच्य हो सकता है राजा भी व्यंग्य हो सकता है।

ऽप्यनेकार्थस्य शब्दस्य यत्क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा, नियमनात्तस्याः। न च लक्षणा मुख्यार्थबाधाद्यभावाद्, अपि त्वंजनं व्यंजनमेव व्यापारः। यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लवगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥१२॥

**(३३) तद्युक्तो व्यञ्जकः शब्दः—**

तद्युक्तो व्यंजनयुक्तः।

**—[३४] यत्सोऽर्थान्तरयुक् तथा।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥ १९ ॥**

तथेति व्यंजकः।

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम द्वितीय उल्लासः।

### मधुसूदनी

इति श्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ द्वितीय उल्लासः समाप्तः।

### बालक्रीड़ा

उस व्यंजना से जो युक्त है वह व्यंजक शब्द है। जब कि वह शब्द अन्य अर्थ का बोधक होता है तब व्यंजक होता है। अतः उस शब्द में सहकारी के रूप में अर्थ भी व्यंजक माना गया है। मूल में तथा का अर्थ व्यंजक है।

इस तरह काव्यप्रकाश के द्वितीय उल्लास में मधुसूदन शास्त्री की कृति
बालक्रीडा समाप्त हुई।

——:०:——

## अथ तृतीयोल्लासः

**अर्थाः प्रोक्ताः पुरा तेषाम्—**

### मधुसूदनी

अथ संयोगादिहेतुकाभिधानियन्त्रणोत्तरमवाच्यार्थधीकृद् व्यापाररूपां शाब्दीं व्यंजनां निरूप्य वक्त्रादिवैशिष्ट्यवशात् प्रतिभाजुषामन्यार्थधीहेतुव्यापार

### बालक्रीड़ा

अब यहाँ तृतीय उल्लास का आरम्भ करते हैं। संयोगादि के द्वारा अभिधा के नियन्त्रण कर देने पर वाच्य अर्थ से भिन्न अर्थ की प्रतीति कराने वाले व्यापार शाब्दी व्यंजना का निरूपण करके वक्त्रादि के वैशिष्ट्य से प्रतिभाशालियों को अन्य अर्थ की प्रतीति

सौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः।

## मधुसूदनी

कारिभिः सह संयोगात् गम्यगमकभावात् अनुमाप्यानुमापकसम्बन्धात् अनुमीयमानो रसनीयत्वेनान्यानुमीयमानविलक्षणो रत्यादिर्भावो रसः। इति।

तद्वैलक्षण्यानि षट्। तथाहि—अन्यानुमितौ पूर्वापरक्रमः यथा पूर्वं व्याप्तिज्ञानं ततो व्याप्त्याश्रयलिंगज्ञानं तत उत्तरं साध्यज्ञानम्। अत्र तु विभावादिप्रतीतिसमकालं साध्यस्य रसस्य प्रतीतिः। इदं प्रथमं वैलक्षण्यम्। तत्र "पर्वतो वह्निमान्" इत्यनुमितेराकारतया लिङ्गात् पृथक् साध्यप्रतीतिः। अत्र तु प्रपाणकरसन्यायेन विभावादिसम्वलिता साध्यप्रतीतिः। इदं द्वितीयं तत्। तत्र तु परस्मिन् पक्षे अत्र स्वस्मिन्। इति तृतीयं तत्। तत्र अस्फुटा अत्र प्रस्फुरन्तीति चतुर्थं तत्। तत्र पक्षे परोक्षा प्रतीतिः अत्र प्रत्यक्षा सेति पंचमं तत। तत्र अनुमेयो

## बालक्रीड़ा

कि आटा आदि उपकरण अलग रह जाय और वे मिठाइयाँ अलग निष्पन्न हो जायँ। यहाँ तो आटा आदि उपकरण ही संयुक्त हुआ मिठाई बन जाता है। और जैसे मट्टी और जल ही घडा बन जाता है उनसे अलग घडा नहीं बनता है उसी तरह विभावादि प्रतीति सम काल में ही रस प्रतीत हो जाते हैं अतः क्रम नहीं है। आचार्य का उल्लेख पानकरसन्यायेन चर्व्यमाणः इस अपने ही उल्लेख से कट जाता है। यह प्रथम वैलक्षण्य है। वहाँ नैयायिकों के यहाँ "पर्वतो वह्निमान्" यह अनुमिति का आकार है। वेदान्ती के यहाँ वह्निकी अनुमिति होती है वे कहते हैं कि पर्वत प्रत्यक्ष है जैसे धूम्र प्रत्यक्ष है। इत्यादि सभी मतों में लिङ्ग से असंवलित साध्य की प्रतीति होती है। यहाँ तो प्रपाणकरसन्याय से विभावादि सम्वलित रस की प्रतीति होती है। यह दूसरा वैलक्षण्य है। वहाँ पक्ष में अनुमाता से अन्य पर्वतादि में साध्य की प्रतीति होती है। यहाँ अपने में द्रष्टा श्रोता पाठक में रस की प्रतीति होती है। यह तृतीय वैलक्षण्य है। वहाँ साध्य की अस्फुट और यहाँ प्रस्फुट की प्रतीति होती है। यह चतुर्थ है। वहाँ परोक्ष है और यहाँ अपरोक्ष है। यह पंचम है। वहाँ अनुमेय वन्हि प्रभृति सिद्ध होते हैं और यहाँ व्यङ्ग रस चर्व्यमाणतैकप्राण होने से साध्य ही होता है सिद्ध नहीं। यह षष्ठ है। अतः कैसे रस की अनुमिति हो सकती क्योंकि अनुमिति के कारणों का अभाव है। इससे मालूम पड़ता है नैयायिक प्रभृति रसके विषय में स्तनन्धय हैं। वे लोग स्तन्य रस की अनुभूति करने वाले हैं। श्रव्य दृश्य पठय काव्य के एवं चित्र के रस के ज्ञाता नहीं है।

नाटयचित्रगतैरेतैः प्रीतिर्भवति चाक्षुषी।
श्रव्यपठयगतैरेतै प्रीतिर्भवति श्रावणी॥

श्रव्य काव्य में रागरागिनीरूप शब्द के द्वारा, दृश्यकाव्य में अभिनेय रूप अर्थ के सामर्थ्य से पठयकाव्य में शब्द और अर्थ दोनों से एवं चित्र में रेखाओं के बल से

## मधुसूदनी

वह्निप्रभृतिः सिद्ध एव अत्र तु चर्व्यमाणैकप्राणतया साध्य एव न तु सिद्धः। पूर्वं सिद्धस्य रसस्याभावात् इदं षष्ठं तत्। एवं हि कथमनुमितिः स्यात्। कारणानामनुमितेरसम्भवात्। ननु मन्ये नैयायिकाः स्तनन्धयाः एवातः स्तन्यरसज्ञाः। न तु श्रव्यदृश्यपठ्यकाव्यरसज्ञाः। न च चित्ररसज्ञाः। श्रव्ये रागरागिनीरूप शब्दबलाद्, दृश्ये अभिनेयरूपार्थबलात्, पठ्ये शब्दार्थोभयबलात्, चित्रे रेखाबलात् विभावादीनां प्रतीतिः। तैस्तैः सह च रसनिष्पत्तिरिति सर्वं सुस्थम्।

अत्र स्वकार्यप्रकटनेन नटे नटेनैव प्रकाशितैरिति को लेखः। बालभाषितमिव प्रतिभाति। स्वकार्यप्रकटनेनेत्यत्र स्वपदार्थो नटो नटी एव नान्यः। नटेनैव प्रकाशितैरिति पाठो व्यर्थः। स्वकीयं कार्यं स्वेनैव प्रकटनीयमिति स्वकार्यप्रकटनकर्ता स्वमेव। अन्योऽपि नाट्ये तत्कार्यप्रकटनकर्त्ता यदि स्यात्तदि तन्माभूदिति नटे नटेनैवोक्तिः कदाचित्स्यात्। ताभ्यां कृतमेव स्वकार्यप्रकटनम्। प्रकटनं प्रकाशनञ्च एकमेव। एवं कथितस्य पुनः कथनं व्यर्थमन्तरा किं स्यात्। अन्यच्च तत्प्रकटनेन कृत्रिमैरिति समन्वयस्य जागरूकतया मध्ये गडुभूतस्य तादृशपाठस्यानावश्यकतया वैयर्थ्यं सुतरां सिद्धम्। स्थायित्वेन स्थितिशीलत्वेन संभाव्यमान इत्यस्य प्रकृते कीदृशी व्यवस्था। नटे असतो रत्यादेः संभावनायां किं गमकम्। को हेतुः। हेतुमन्तरा प्रतिज्ञावाक्येन संभावना दुःशका। सामाजिकानां वासनया चर्व्यमाण इति तु नितान्तं गडबडः पाठः। गड सेचने तथा वड विभागे इति धातुभ्यां घञर्थे कविधानात् साधु गडइति वड इति पदम्। ततो गडश्चासौ वडश्चेति कर्मधारये गडवड इति पदम् तस्यार्थः पूर्वं सिक्तः पश्चात् विभक्तः कर्तितः। एवञ्चासाधुरेवेति तात्पर्यार्थः। पठ्यमित्यत्र च पठनं पठः कः प्रत्ययो घञर्थे। पठे साधुः पठ्यम्।

## बालक्रीड़ा

विभावादि की प्रतीति होती है अतः उनसे और उनके साथ रस की प्रतीति होती है। इसलिए मम्मटाचार्य ने "व्यक्तः स तैर्विभावाद्यैः" इसकारिका में तैः पद का उपन्यास विभावाद्यैः से पृथक किया है। वहाँ तैः का अर्थ है तैः सह।

यहाँ विचार होता है कि "नट में स्वकार्यप्रकटन के द्वारा नट से ही प्रकाशित किए" यह कौन लेख है। "स्वकार्य प्रकटन" इस में स्व पद का अर्थ है नट एवं नटी। इनके सिवाय अन्य कोई नहीं है। नट के अपने कार्य का प्रकटन प्रकाशन कोई भी नट अपने स्वयं ही करता है। अतः स्वकार्यप्रकटनकर्ता नट स्वयं ही होता है। हाँ यदि नट से अन्य भी कोई उस कार्य का प्रकटन कर्त्ता हो तब उस हालत में उसके निवारण के लिए "नट में नट के द्वारा" ऐसा कथन कदाचित् हो सकता है। उन्होंने जब अपने कार्य का प्रकटन कर ही दिया और प्रकटन और प्रकाशन पदार्थ एक ही है तब कथित

स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।

## मधुसूदनी

नैयायिक श्रीशंकुकस्य मते अनुमितिरेव रत्यादेर्न तु चर्व्यमाणताभिमता। तस्याः स्वीकारे अनुमितिर्न स्यात्। सन्दिग्धस्य अनुमितिः। प्रस्फुटस्य चर्वणा इति विषयभेदात्। तदेतदुक्तं श्रीशंकुकमतखण्डनावसरेऽभिनवगुप्ताचार्यैः—

'न तु यथा श्रीशंकुकादिभिरभ्यधीयत। स्थाय्येव विभावादिप्रत्याय्यो रस्यमानत्वाद्रस उच्यते। एवं हि-लौकिकोऽपि किं न रसः,। असतोप्यत्र रसनीयता स्यात्तत्र वस्तुसतः कथं न भविष्यति। तेन स्थायिप्रतीतिरनुमितिमयी वाच्या न तु रसः। इति। अन्यच्च मम्मटमहाशयैरभिनवोद्धृतान्येवाक्षराणि लिखितानि। तानि चेमानि श्रीशंकुकीयानि-तस्मात् हेतुभिर्विभावाख्यैः कार्यैरनुभावात्मभिः सहकारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्यमानै रनुकर्त्तृस्थत्वेन लिङ्गबलतः प्रतीयमानः स्थायिभावः मुख्यरामादिगतस्थाय्यनुकरणरूपः। अनुकरणत्वादेव च नामान्तरेण व्यपदिष्टो रसः। विभावा हि काव्यबलादनुसन्धेयाः। अनुभावाः शिक्षातः। व्यभिचारिणः कृत्रिमनिजानुभर्वार्जनबलात्। स्थायी तु काव्यबलादपि नानुसन्धेयः।

न चात्र नर्त्तक एव सुखीति प्रतिपत्तिः। नाप्ययमेव राम इति। न चाप्ययं न सुखीति। नापि रामः स्याद्वा न वायमिति। नापि तत्सदृश इति।

## बालक्रीड़ा

का पुनः कथन व्यर्थ होने के सिवाय और क्या हो सकता है। अतः नटेनैव प्रकाशितैः यह पाठ व्यर्थ है। और भी बात है कि उसके प्रकटन कर देने से कृत्रिम है इस तरह जब समन्वय हो सकता है तब मध्य में गड्डभूत इस पाठ की क्या आवश्यकता है अतः अनावश्यक होने से भी यह पाठ व्यर्थ है। प्रश्न—"स्थायित्वेन सम्भाव्यमानः" इस पाठ की प्रकृत में कैसी व्यवस्था है। उत्तर—पर्वतादि पक्ष में रहने वाली ही वन्हि की अनुमति होती है न कि असल की। प्रकृत में काव्य के अनुसन्धान से नट रामादि का अभिनय करता है वहाँ काव्य में वर्णनीय रामादि एवं सीतादि है। उन वर्णनीयों में परस्पर में रहने वाली रति अभिनेता नट में कैसे रह सकता है अतः नट में असत् रति की सम्भावना करते हैं। प्रश्न—इस सम्भावना में गमक क्या है। कौन हेतु है। हेतु के विना प्रतिज्ञा वाक्य से साध्य की सिद्धि नहीं होती है अतः वैसी सम्भावना करना भी मुश्किल है। यदि आप कहेंगे कि राम एवं सीतादि की रति परस्पर में राम एवं सीतादि में ही रहेगी नट में नहीं अतः नट में असत् रति की सद्भावना करते हैं तो यह आपका उत्तर ठीक नहीं है। क्योंकि पहली बात तो यह है कि जब तक नट तद्भावनाभावित नहीं होगा और वह ऐसा

## मधुसूदनी

किन्तु सम्यङ्-मिथ्या-संशय-सादृश्य-प्रतितीभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः असावयमिति प्रतीतिरस्तीति। एवमत्र कुत्रापि स्थायित्वेन सम्भाव्यमान इति सामाजिकानां वासनया चर्व्यमाण इति च पाठो नास्त्येव।

तस्मादेवमत्र पाठः साधीयान्। राम एवायम्, अयमेव राम इति। न रामोऽयमिति औत्तरकालिके बाधे रामोऽयमिति। रामः स्याद्वा न वायम्। इति। रामसदृशोऽमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्र-तुरगादिन्यायेन "रामोऽयमिति" प्रतिपत्त्या ग्राह्ये नटे असन्नपि "सेयं ममांगेषु सुधारसच्छटा।" इति "दैवादहमत्र तया चपलायतनेत्रया" इत्यादिकाव्यानु-सन्धनशिक्षाभ्यासबलान्निर्वर्तितस्वकार्यप्रकटनेन कृत्रिमैरपि वस्तुसौन्दर्यबला-त्तथानभिमन्यमानैः विभावादिशब्दव्यपदेश्यैः कारणादिभिः संयोगाद् गम्य-गमकभावरूपात्, अनुमीयमानः किन्तु रसनीयत्वेनान्यानुमीयमानविलक्षणो रत्यादिर्भावो रस इति। कृत्रिमत्वेन रोमाञ्चत्वेन चाज्ञातकृत्रिमरोमाञ्चविशेष्य-कसीताविषयकरतिनिरूपितभ्रमात्मकव्याप्तिप्रकारकज्ञानाद्रत्यादेरनुमितिरिति।

## बालक्रीड़ा

समझेगा कि मैं तो अमुक नट हूँ यह अमुक नटी है तब तक वह अभिनय ही नहीं कर सकेगा उस अभिनय में सफल होना तो दूर रहा। अतः उक्त उत्तर ठीक नहीं है। दूसरी बात है कि रामादि एवं सीतादि कीं परस्पर की रति तो रस बनती नहीं। क्योंकि रस की अनुभूति तो सहृदय सामाजिक को होती है और सामाजिक में रामादि एवं सीतादि की परस्पर सम्बन्धी रति रहती नहीं है। वहाँ भी तब कहिये कि असत् ही रति है। ऐसी हालत में सामाजिकानां वासनया चर्व्यमाणः पाठ की कैसे संगति होगी। क्योंकि रति असत् यानी है ही नहीं तब चर्वणा किसकी अतः वह चर्वणा भी असत् है। यह तो वह बात हुई। तीसरी बात है कि अन्यत्र नट में सम्भाव्यमान असत् रति की चर्वणा अन्य सामाजिक करें भला यह कोई सिद्धान्त हुआ। यह तो ऊँट पे टांग हुई चलते हैं जमीन पर और टाँग ऊँट पर। अतः यह सब लेख गड़बड़ है (इस शब्द की साधनिका मधुसूदनी में देखिए। पठ्य और श्रव्य काव्य पृथक् २ हैं। पठ का अर्थ है व्यक्ता वाणी। वाणी में व्यक्तत्व है विवक्षा के विषयीभूत अर्थ के अर्पण करने में क्षमता। श्रव्य में अर्थकी विवक्षा नहीं है। उसको तो सुनने में सुखद माना है। अतः वहाँ श्रावणप्रत्यक्षविषयीभूत शब्द मुख्य है।)

यहाँ नैयायिक श्रीशंकुक के मत में रत्यादि की प्रतीति को अनुमिति रूप ही कहा है न कि रस। अतः वे रत्यादि चर्व्यमाण भी नहीं है। यदि उनको चर्व्यमाण मानेंगे तो अनुमिति नहीं होगी। क्योंकि अनुमिति सन्दिग्ध पदार्थ की होती है। और चर्व्यमाणता प्रस्फुट अर्थात् असन्दिग्ध की होती है। इसके सिवाय अनुमिति पूर्व सिद्ध की होती है और चर्व्यमाण पदार्थ वर्त्तमान कालिक अतः साध्य होता है इस तरह इनमें

न ताटस्थ्येन (?) ( तटस्थगतत्वेन ) नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते

मधुसूदनी

एतदेव सूत्रं भट्टनायको विवृणुते—न ताटस्थ्येनेति । तटस्थस्य भावस्ताटस्थ्यं तटस्थत्वं तेन तटस्थत्वेन तटगतत्वेन रस इति का संगतिः । अतो न आत्मगतत्वेन इतिवत् न तटस्थगतत्वेन इति पाठः साधीयान् । तथा च "तटस्थः स्यादुदासीनः" इति कोषोक्तेः प्रकृते आत्मापेक्षया उदासीनः अनुकर्त्ता नटः, अनुकार्यो रामादिः । तयोर्गतः । तत्त्वेन रसो न इति समीचीना व्याख्या । अभिधातोऽद्वितीयेनेति । ननु विभावादिभी रसः । विभावादीनामुपस्थितिश्च श्रव्ये काव्ये रागरागिनीरूपशब्दबलात्, दृश्ये काव्ये नाट्ये अभिनेयार्थबलात्, दृश्ये काव्यभिन्ने चित्रे शब्दार्थशून्यरेखाबलात्, दृश्ये काव्यरूपे चित्रे सार्थकशब्दरूपवर्णमयरेखावलात्, पठ्ये काव्ये शब्दार्थोभयबलात् । तत्र नाट्यमभिनयप्राणत्वात्, चित्रं रेखास्वरूपत्वात्, पठ्यं चापि उभयरूपत्वात् केवलाशब्दरूपम् ।

बालक्रीड़ा

विषय भेद एवं प्रतीति भेद है । यहाँ के विषय की अधिक जानकारी मधुसूदनी के द्वारा करें । वहाँ मम्मटाचार्य के द्वारा संगृहीत अभिनवगुप्ताचार्य जी की मनोरम कान्तपदावली का उद्धरण कर दिया है । उसमें देखें कि कहीं भी वहाँ "स्थायित्वेन सम्भाव्यमानः" और "समाजिकनां वासनया चर्व्यमाणः" ये दोनों पाठ या उसका भाव या तात्पर्य नहीं है ।

इस सूत्र का विवरण भट्टनायक ने भी किया है कि । रस न तटस्थ यानी स्वात्मासे उदासीन अनुकर्त्ता एवं अनुकार्य में और न स्वात्मा में श्रीशंकुक के अनुसार प्रतीत अनुमित होता है न भट्ट लोल्लट के अनुसार रत्यादि की उत्पत्ति मानकर उत्पन्न होता है और न अभिनवगुप्ताचार्य के मत के अनुसार अभिव्यक्त होता है अपि तु श्रव्य एवं पठय काव्य में तथा नाट्य दृश्य काव्य में अभिधातः अर्थात् अभिधा के समानशील किन्तु अद्वितीय शास्त्र एवं लोक में व्यवहृत नहीं होने के कारण अपूर्व एवं विभवादि को साधारण बना देने वाले भावकत्व व्यापार से भाव्यमान साधारण किए गये स्थायी को साक्षात्कारस्वरूप भोग के द्वारा अनुभव का विषय करते हैं ।

यहां विचार करते हैं कि ताटस्थ्येन का अर्थ तटगतत्वेन होता है । क्योंकि तट में स्थित तटस्थ अर्थात् तटगत कहलाता है । उसका भाव ष्यञ् करने वर ताटस्थ्य और त्व करने पर तटस्थत्व तटगतत्व होता है । ऐसी स्थिति में "रस न तट में स्थित गत होकर प्रतीत होता है" यह कौन संगति हुई कौन लेख हुआ । अतः आत्मगतत्वेन की तरह तटस्थगतत्वेन यही पाठ है ताटस्थ्येन यह पाठ अशुद्ध है । तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोः इस बल नामक कोष के अनुसार तटस्थ माने उदासीन । प्रकृत में स्वात्मा की अपेक्षा तटस्थ उदासीन अनुकार्य रामादि और अनुकर्त्ता नट तद्गतत्वेन रस नही है । ऐसा

## मधुसूदनी

अभिधा च शब्दव्यापारः। एवञ्च अशब्दरूपेषु तेषु शब्दव्यापाररूपा अभिधा एव यर्हि नास्ति तर्हि कुतस्तस्याः प्रथमत्वं तदभावे च कुतो भावकत्वव्यापारस्य

## बालक्रीड़ा

उल्लेख ठीक है। अभिधातोऽद्वितीयेन ऐसा अकार प्रश्लिष्ट पाठ है। अतः द्वितीयत्व अर्थ यहाँ विवक्षत नही है। क्योंकि विभावादि से रस की निष्पत्ति होती है और विभावादि की उपस्थिति की साधन कला है। वह कला वस्तुतः एक ही है किन्तु व्यवहार में ये कलाएँ काव्य कला १ संगीत कला २ चित्रकला ३ टंकण कला ४ स्थाप्य कला ५ स्थापत्य कला ६ वास्तुकला ७ एवं कर्तन कला ८ प्रसिद्ध हैं। क्योंकि यह सिद्धान्त है कि प्रत्येक कला में माध्यम बदल जाता है और जहां माध्यम बदला कि कला का नाम बदला। इनमें पहली कला काव्यकला है। जैसा कि कहा है कि "कलासीमा काव्यं सकलगुणसीमा वितरणम्" काव्य कलाओं की सीमा है अर्थात् काव्य उत्कृष्ट कला है। काव्य शब्द अर्थ और उभय प्रधान है। यह तीन प्रकार का है। रस रीति वृत्ति प्रवृत्ति गुण अलंकार एवं छन्द जहां रहे वह पद्यरूप १ जहां रसादि सभी भी रहें किन्तु केवल छन्द न रहे वह गद्यरूप २ और जहां रसादि सभी रहें किन्तु केवल छन्द का कभी ग्रहण एवं कभी त्याग रहे वह गद्यपद्योभयात्मा चम्पूकाव्य है। दूसरी संगीत कला है। उसका स्वरूप बतलाया है कि (गीतं वाद्यञ्च नृत्यञ्च त्रिकं संगीतमुच्यते) गाना बजाना एवं नाँचना इस त्रिक को तीनों के समुदाय को संगीत कहते हैं! क्योंकि संगीत वह कला है जिसमें स्वर ताल एवं लय के द्वारा संगीतज्ञ कलावन्त लोग अपने भावों को प्रगट करते हैं। इनमें कभी पृथक् २ एक २ के द्वारा और कभी इस समुदाय के द्वारा। क्योंकि गीत का तो केवल सा. रे. ग. म. प. ध. नि. इन सात स्वरों के लिए उपयोग होता है। किन्तु कुछ वाद्य ऐसे हैं जिन में स्वर की प्रधानता है जैसे डमरू, झाँझ, ढोलक आदि। कुछ ऐसे हैं जिसमें ताल की प्रधानता है जैसे मृदंग, नगारा, पखावज और तबला। तबला पखावज के दो टुकडे हैं। इनमें सप्त स्वरमय राग रागिनी स्वरूप आलाप प्रधान श्रव्य काव्य है जैसे गीत गोविन्दादि। जहां स्वर ताल एवं लय ये तीनों समुदित रहें वह अभिनय के योग्य नायक चरितरूप शब्द बोध्य अर्थ प्रधान दृश्य काव्य है। क्योंकि इसमें नायक के चरित के अनुकरण स्वरूप नाट्य से अभीनीयमान नायक चरित अभिनेय है क्योंकि देवताओंने भरत मुनि से अपनी इच्छा व्यक्त की थी कि हम ऐसा प्रेक्षणीयक चाहते हैं जो दृश्य भी हो और श्रव्य भी हो। जैसा कि नाट्यशास्त्र का लेख है—प्रेक्षणीय कमिच्छामो दृश्यं श्रव्यञ्च यद्भवेत्। तीसरी चित्रकला है। चित्रकला वह कला है जिसमें रेखाओं के द्वारा चित्रकार लोग अपने भावों को प्रगट करते हैं। इस कला के कई प्रकार हो सकते हैं। किन्तु इस समय में चार प्रकार प्रसिद्ध हैं। जैसे कागज, कपड़ा, दिवाल, आदि आधार पर भिन्न २ रंगों से तूलिका के द्वारा हाथ से निर्मित छवि

## मधुसूदनी

**द्वितीयत्वं इति तथा शब्दानुस्यूतेष्वपि तेषु न केवलाभिधा तत्रापि अभिधा-**

## बालक्रीड़ा

चित्र का प्रथम भेद है। फोक्स डालकर कैमरे से गृहीत छवि दूसरा। एक्स नामक रे (किरणों) के द्वारा गृहीत छवि तीसरा एवं अपने अभीष्ट रूप में वर्णों की लिपि से प्राप्त छवि चौथा है। यह चौथा भी चार प्रकार का है आकार चित्र १ बन्ध चित्र २ गतिचित्र ३ और स्थान चित्र ४। यही रेखामय लिपि प्रधान चित्र काव्य है। चौथी तीन प्रकार की मूर्तिकला है जिसका पहला भेद किन्तु क्रम में चौथी टंकणकला है। टंकण वह कला है जिसमें टाँकी के द्वारा पत्थर को काट-२ कर अपने भावों के अनुसार किसी भी मूर्ति को अभिव्यक्त कर देते हैं जैसे देवता की मूर्तियां एवं स्टेच्यू। यह पाषाणमयी मूर्ति-कला है। इसका दूसरा भेद क्रमानुसार ५ वीं स्थाप्यकला। स्थाप्यकला वह कला है जिसमें सोना चान्दी ताम्बा आदि धातुओं को गलाकर या मट्टी को गिला करके ठप्पे में भरने से भावमयी मूर्ति को व्यक्त करते हैं वह धातु आदि मूर्तिकला है। इसका तीसरा भेद किन्तु क्रमानुसार छठीं कला स्थापत्यकला है। स्थापत्य कला वह कला है जिसमें काष्ठ को खुरचकर स्थपति बढ़ई लोग भावमयी मूर्ति को स्पष्ट करते हैं वह काष्ठ कला है। सातवीं वास्तु कला है भवन निर्माण आदि इसी के अन्तर्गत है। आठवीं कर्त्तन कला है। भिन्न २ लताओं का कर्त्तन करके सिंह मृगादि के रूप में एवं कागज का कर्त्तन करके पुष्प आदि के रूप में तथा कपड़े का कर्त्तन करके कोट, कुर्त्ता, पैण्ट, बुस्सर्ट आदि के रूप में अपने भावों को व्यक्त करना। इन सबसे विभावादि की उपस्थिति होती है। अतः विभावादि के रहने पर ही रहने वाला और नहीं रहने पर नहीं रहने वाला रस अवश्य ही रहेगा कभी अर्थसहकृत शब्दस्वरूप किन्तु स्वर, ताल एवं लय प्रधान श्रव्य काव्य में, शब्द सहकृत अर्थस्वरूव स्वर ताल एवं लयमय अभिनय प्राण दृश्य काव्य में, शब्दार्थोभयात्मा अतएव केवल शब्दानिष्ठ पठ्य काव्य में एवं अर्थसहकृत शब्द तदेकदेश वर्णात्मा रेखा प्रधान चित्रकाव्य में केवल अभिधा ही नहीं है किन्तु उनमें लक्षणा एवं व्यंजना है और तात्पर्याख्या शक्ति भी है। ऐसी हालत में इन कलाओं में उन चारों के रहने पर भावकत्व व्यापार द्वितीय कैसे होगा। आलाप स्वरूप अतएव अर्थासहकृत शब्दात्मा श्रव्य काव्य एवं आकार चित्र तथा अवशिष्ट शब्द शून्य जितनी कलाएँ हैं उनमें शब्द व्यापार अभिधा ही नहीं है तब प्रथमत्व के विना भावकत्व व्यापार द्वितीय कैसे होगा।

इसके उत्तर में कहते हैं कि ठीक है किन्तु ग्रन्थ ग्रन्थि है। श्रद्धा से गुरु की आराधना करोगे तभी इस तरह की दृढ़ ग्रन्थियों को खोल सकोगे। अच्छा सुनो। यहाँ अभिधातः इस में तेनैकदिक् सूत्र के अधिकारस्थ तसिश्च इस सूत्र से अभिधा के एकदिक् समान वर्त्मा इस विग्रह में तसि प्रत्यय हुआ है। और यह तसि स्वरादिगण में पठित है

नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो (ऽ) द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः ।

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव

## मधुसूदनी

लक्षणातात्पर्याख्यास्तिस्रः शक्तयः । एवं तिसृणां तासां सद्भावे कथं भावकत्वव्यापारस्य द्वितीयत्वमिति चेन्न । ग्रन्थग्रन्थिरियम् । चेच्छ्रद्धया गुरुमाराधयिष्यः तर्हि दृढामपि ग्रन्थग्रन्थिमश्लथयिष्यः । अतः शृणु । अत्र "तेनैकदिक्" इत्यधिकारे "तसिश्च" इति सूत्रेण अभिधया एकदिक् समानवर्त्मा इति विग्रहे तसि प्रत्यये सति अभिधात इति रूपं निष्पन्नम् । तसेश्च स्वरादिपाठादव्ययतया अभिधात इत्यव्ययपदम् । अभिधातोऽद्वितीयेन इत्यत्र अकारप्रश्लेषः । एवं च अद्वितीयेन शास्त्रान्तरेषु लोके च तदभावात् अपूर्वेण अभिधातः अभिधैकदिशा अभिधासमानवर्त्मना भावकत्वव्यापारेण । तदेकदिक्त्वं च तत्तुल्यं व्यापृतौ कर्त्तृत्वम् । अभिधा यथा अर्थानामुपस्थापने व्यापृणोति तथाऽयं भावकत्व व्यापारस्तेषां साधारणीकरणे व्यापृणोति । इति । एवमत्र प्रथमत्वद्वितीयत्वशंका अभिधाविषये जागर्त्येव न हि ।

एतदेव सूत्रमभिनवगुप्ताचार्यो विवृणुते । तत्र भट्टलोल्लटश्रीशंकुकभट्टनायकादीनां मतेन रसं निरूप्य आलोचनाप्रवृत्तस्तेषां मतं खण्डयामास । पुनः

## बालक्रीड़ा

अतः अव्ययपद है । और तृतीया विभक्ति का रूप होने से भावकत्वव्यापारेण का विशेषण है । अभिधातोऽद्वितीयेन में अकार का प्रश्लेष है । इस तरह अद्वितीय पदच्छेद यहाँ है । इसके अनुसार अद्वितीय शास्त्रान्तर एव लोक में जिसका व्यवहार नहीं है अतः अपूर्व और अभिधा के समान शील वाले भावकत्व व्यापार से साधारणीकरण विभावादि का होता है । भावकत्व व्यापार में अभिधाके समानशीलत्व है अभिधा जैसे अर्थ के उपस्थान में व्यापृत होती है उसी तरह यह व्यापार उन अर्थों के साधारणीकरण में व्यापृत होता है । इस तरह यहाँ अभिधा के विषय में प्रथमत्व एवं द्वितीयत्व की शंका उठती ही नही है ।

इसी सूत्र का विवरण अभिनवगुप्ताचार्यजी ने किया है । वहाँ भट्टलोल्लटादि के मत में रस के स्वरूप का निरूपण एवं आलोचन करके अपने मत से रस के स्वरूप का जो निरूपण किया उसी को मम्मट महाशय जी अपने अक्षरों में लिखते हैं—

लोक में प्रमदादि के द्वारा स्थयी रत्यादि के अनुमान माने अनुमिति के करने के अभ्यास में पटु काव्य श्रव्य पठय चित्र एवं नाट्य दृश्य काव्य में विभावनादिरूप व्यापार-

## मधुसूदनी

स्वयमाशंक्य "नन्वेवं कथं रसतत्वमास्ताम्। किं कुर्मः। इति। तर्हि उच्यतां परिशुद्धतत्त्वम्। उक्तमेव मुनिना नत्वपूर्वं किञ्चित् कथनीयम्। इत्युल्लिख्य बहूल्लिलेख। अथ परं पर्यन्ते यदुदलेखीत् तदेव मम्मटमहाशयः स्वाक्षिरैरङ्कितवान्। अभिनवाक्षराणि चेमानि—

तत्र लोकव्यवहारे कार्यकारणसहचारात्मकलिंगदर्शने स्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यासपाटवादधुना तैरेच उद्यानकटाक्षवीक्षणादिभिर्लौकिकीं कारणत्वादिभुवमतिक्रान्तैः विभावनानुभावनसमुपरंजनमात्रप्राणैरत एवा प्राच्य कारणादिरूपसंस्कारोपजीवनख्यापनाय अलौकिकविभावादिव्यपदेश्यैर्गुणप्रधानतापर्यायेण सामाजिकधियि सम्यग् योगं सम्बन्धमैकाग्र्यं वासादितवद्भिरलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरतां नीतोऽर्थः चर्व्यमाणतैकसारो न तु सिद्धस्वभावः, तात्कालिक एव न तु चर्वणातिरिक्तकालावलम्वी स्थायिविलक्षण एव रसः। इति।

## बालक्रीड़ा

शाली होने से कारणत्वादि अर्थों का परिहार करके अलौकिक विभावादि शब्दों से व्यवहार के योग्य मेरे ही हैं, शत्रु ही के हैं, तटस्थ ही के हैं, मेरे ही नहीं है शत्रु ही के नहीं है तटस्थ ही के नहीं है इस रूप में सम्बन्ध के स्वीकार एवं परिहार सम्बन्धी नियमों के ज्ञान के अभाव में साधारण रूप में प्रतीत कारणादि से अभिव्यक्त सामाजिकों के हृदय में वासना रूप में स्थित रत्यादि स्थायीभाव नियत प्रमाताओं में स्थित होकर भी साधारण माने व्यक्तिविशेष के सम्बन्धी के रूप में अप्रतीयमान उपाय विभावादि के बल से तत्काल रसास्वाद काल में विगलित हट गया जो परिमित प्रभातृभाव अर्थात् मेरे ही ये विभाव हैं मैं ही इनके द्वारा आस्वाद ले रहाँ हूँ ऐसे व्यक्ति विशेष के सम्बन्ध का जो अभाव उसके वश से उन्मिषित एवं रस से अन्य वेद्य विषय घटादि रूप के सम्पर्क से शून्य होने से अपरिमित भाव वाले प्रमाता के द्वारा सकल सहृदयों के सम्वाद से युक्त अतएव साधारण रूप से अपने आकार की तरह अभिन्न हुआ भी गोचरीकृत ( योगाचार नामक बौद्ध के मत में स्व माने ज्ञान उसका आकार विशेष ही विषय है अतः ज्ञान से भिन्न विषय नहीं है। इस लिये जैसे ज्ञान स्वरूप ही ज्ञेय है वैसे ही आनन्दात्मक आस्वाद रूप ही रस आस्वाद्य है ) विभावादि जीवितावधि तथा चर्व्यमाणता ही जिसमें प्राण है अर्थात् चर्वणा के विषय विभवादि की जीवित सत्ता पर्यन्त स्थायी अतएव चर्वणा के काल से अतिरिक्त काल में नहीं रहने वाला पानक रसन्याय से चर्व्यमाण अर्थात् जैसे इलायची मरीच शर्करा कपूर आदि से सम्पन्न किया गया भी उक्त वस्तुओं के समुदाय के सम्वलन से प्रत्येक में रहने वाले तत्त्व की अपेक्षा समुदायगत विलक्षण तत्त्व से युक्त पानक रस की तरह विभावादि से अभिव्यक्त हुआ भी उक्त समुदाय के सम्वलन से प्रत्येक की अपेक्षा विलक्षण रूप से

कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्य्यैः ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगत-

## मधुसूदनी

एतान्यक्षराण्यनुसृत्य मम्मटमहाशयो यल्लिलेख तत् समस्तमस्तव्यस्तं पुनरुक्तिग्रस्तं च वर्त्तते। तेन प्रतीयते यदयमभिनवगुप्ताशयमनुसर्तुं न शशाक। तथाहि—

"सामाजिकानां वासनात्मतया स्थितः स्थायी" अत्र स्थातुं शीलः स्थायीति पदोपन्यासेनैव रत्यादेः स्थितत्वं लब्धं पुनः "स्थितः" इति पदोपादानं व्यर्थम्। "नियतप्रमातृगतत्वेन स्थितोऽपि" इति को लेखः। गतः स्थितः निष्ठ इत्यनर्थान्तरम्। "नियतप्रमातृगतोऽपि" इत्येवोक्तिः पर्याप्ता स्यात्। अतः गतत्वेन स्थित इत्युक्तिः महामहतां कीदृशीति सुधियः शोधयन्तु। अन्यच्च सामाजिकोऽन्यः अथ च प्रमाताऽन्यः किम्। यतो भिन्नाभ्यां पदाभ्यां स एवार्थः पुनरुपन्यस्तः। सामाजिकानां वासनात्मतया स्थितः" इत्युक्त्यैव नियतप्रमातृगतत्वेन स्थितः इत्यर्थो लब्धः। यतो नियतेषु प्रमातृषु केन रूपेण गतः। यर्हि तेषु वासनात्मतयैव तु गतः। पुनस्तर्हि चर्वितचर्वणे को हेतुः। "सामाजिकानाम्" इति पदं गोचरीकृत इति पदेन चर्व्यमाण इति पदेन च नान्वेति ततः "प्रमात्रा" इति पदस्य पुनरुपन्यासकरणमावश्यकमिति भवतां लेखप्रक्रियया प्रतिभाति। सा प्रक्रिया अस्तव्यस्तेति दर्शितैव। पुनः प्रदर्श्यते च।

## बालक्रीड़ा

आस्वाद्यमान शृङ्गारादि रस है जो मालूम पड़ रहा है मानों सामने चमक रहा है, हृदय में प्रवेश कर रहा है, अङ्ग अङ्ग में आलिङ्गन कर रहा है अपने सिवाय अन्य सर्व को छिपाकर ब्रह्मास्वाद के सदृश आस्वाद का अनुभव करा देने वाला अलौकिक सब साधारण लोक दुर्लभ चमत्कार आनन्द का कारी है।

इस पर विचार होता है कि मम्मट महाशय जी ने लिखा जरूर किन्तु यह समस्त अस्त व्यस्त एवं पुनरुक्ति ग्रस्त ही है। इससे प्रतीत होता है कि अभिनव गुप्ताचार्य जी के आशय का अनुसरण नहीं कर सके। आचार्य जी ने लिखा है कि कारणत्वादि की भूमी को अतिक्रान्त कर गये अर्थात् कारणत्व आदि के आश्रय कारण आदि शब्दों के व्यपदेश्य नहीं रह गये। अतएव अलौकिक विभाव आदि शब्दों से व्यपदेश्य होने वाले। यहाँ इसका आशय हुआ कि लोक में जिनको कारण आदि शब्दों से कहते थे काव्य में उन शब्दों का परिहार करके विभावादि शब्दों का व्यवहार करना चाहिए। उसकी

## मधुसूदनी

यो रत्यादिः सामाजिकानां वासनात्मतया स्थितः स प्रमात्रा गोचरीक्रियते चर्व्यते च। येषां वासनात्मतया स्थितः ते सामाजिकाः के। येन गोचरीक्रियते स प्रमाता कः यदि भिन्नौ तौ। तर्हि मन्ये प्रमाता अन्तर्यामी। यः सामाजिकानामन्तर्हृदि वासनात्मतया विपरिवर्त्तमानं रत्यादिं गोचरीकरोति चर्वयति च। अतस्तथोपन्यासकरणं व्यर्थमेव।

किंच साधारणोपायबलात् तत्काले प्रमातरि परिमितत्वं विगलितम्। तत्कथम्। अयं भावः। नगरमहालिकादिसंस्थासु विधानसभादिषु संभासु स्कूलकालेजादिपाठालयेषु च चयनेन प्रापणीयं पदं सर्वेषामस्ति तथा केषामपि नास्ति। तस्य प्राप्तेरुपायाः साधारणाः। प्राप्तिकर्त्तारोऽपि समानाः। तत्प्रापणीयपदमपि

## बालक्रीड़ा

जगह पर आपने कारणत्वादि परिहारेण लिखा है अतः कारणादि परिहारेण ऐसा लेख चाहिए।

अभ्यासपाटववतां यह सामाजिकों का विशेषण है अतः सामाजिकानां विशेष्य को विशेषण के सन्निहित रखना चाहिए अन्यथा दूरान्वय दोष हो जाता है। अतः अभ्यासपाटववतां सामाजिकानाम् ऐसा सन्निहित पाठ करना चाहिए। विभवादि शब्दों से व्यवहार्य कौन। व्यवहरणीय विशेष्य पदार्थ का उपादान नहीं किया जो कि करना चाहिए था। यह भी ठीक है कि ( क्वचिद् विशेषणेनापि विशेष्य प्रतिपत्तिः ) कहीं पर विशेषण से भी विशेष्य की प्रतिपत्ति होती है। किन्तु जब स्थातुं शीलः इस अर्थ वाले स्थायी पद से रत्यादिका स्थितत्व मिल ही जाता है तब भी आपने व्यर्थ ही स्थितः पद का उपन्यास किया। अतः यहाँ भी निराकांक्ष प्रतिपत्ति के लिए कारणादिभिः इस विशेष्य पद का उपन्यास सार्थक करना चाहिए। नियतप्रभातृगतत्वेन स्थितोऽपि यह कौन लेख है। क्योंकि गतः स्थितः निष्ठः ये सभी शब्द एक अर्थ वाले हैं। अतः नियतप्रमातृगतोऽपि इतना ही लिखना पर्याप्त है। फिर भी गतत्वेन स्थितः ऐसा इन महापुरुषों का कैसा लेख है। और भी प्रश्न होता है कि क्या सामाजिक अन्य है और प्रमाता अन्य है। क्योंकि भिन्न पदों से उसी अर्थ का उपन्यास किया है। जैसे सामाजिकों की वासना रूप से स्थित है ऐसा कहने से ही नियतप्रमाता में स्थित है ऐसा अर्थ मिल ही जाता है फिर भी सामाजिक और नियतप्रमाता के रूप से उनका दो बार उपन्यास किया। नियत प्रामताओं में किस रूप से स्थित है वासनारूप से ही स्थित है। ऐसी हालत में चर्वितचर्वणा करने में क्या हेतु है। सामाजिकनाम् यह पद गोचरीकृतः और चर्व्यमाणः इस पद से अन्वय नहीं करता है अतः प्रमात्रा इस तृतीयान्त पद का पुनः उपन्यास करना आवश्यक है ऐसा आप के

मधुसूदनी

समानम्। यतः कोऽपि तत्प्राप्नोतु। वस्तुतस्तु चयनादुत्तरं तत्प्राप्तेरनन्तरमनुभवकाले ममैवेदं पदमहमेवास्याधिकारी तथैवात्राऽपि आस्वादकाले य आस्वादयति स परिमित एव प्रमाता। सा अन्या कथा यत् आस्वादकाले तन्मयो भवति नान्यत् प्रत्येति। इति। अन्यच्च। तद्विगलनं नाम प्रमातरि अपरिमितत्वमेव। एवं पुनः विगलनवशेन तदुन्मेषः इति कोक्तिः। न हि धर्माधर्मौ इव परिमितापरिमितभावौ पृथक् पदार्थौ। अपि तु यथा तेजोऽभाव एवान्धकारो न तु पृथक्, तथा परिमितभावाभाव एव अपरिमितभावोऽपि।

अन्यच्च परिमितप्रमातृभावस्य विगलनेन प्रमातरि अपरिमितभाव एव वेद्यान्तरसम्पर्कशून्यः कथमुन्मिषति। अयं रत्यादिरित्याकारकं ज्ञानमपि पटरूपवेद्यान्तरसम्पर्कशून्यं तदपि तथा, नात्र विशेषः। एवं न हि भोः। समूहालम्बनज्ञाने वेद्यान्तरसम्पर्कोऽपि भवति। तन्मा भूदिति तथोल्लेखः। अस्तु। परं तन्नात्र स्वीकृतम्। अत्र तु प्रपाणकरसन्यायः स्वीकृतः। ननु रसो ज्ञानस्वरूपः। तस्यानुभवकाले रसरूपं ज्ञानमेव वेद्यं तदतिरिक्तं वेद्यं नास्ति इत्याशयेन तथोल्लेख इति चेन् मृगतृष्णिकेव। नेदं रसचर्वणायां विशेषणमपि तु अपरिमितभावोन्मेषे। अन्यच्च—तज् ज्ञापनार्थन्तु भवता स्वाकारवदभिन्नत्वेनेति समुदलेखि एव। अतः पुनस्तथोल्लेखो नितरामसंगतः।

बालक्रीड़ा

लेख की प्रक्रिया से मालूम पड़ता है। किन्तु वह प्रक्रिया अस्त व्यस्त है यह दिखा दिया गया है। फिर भी दिखाते हैं।

जो रति वगैरह सामाजिकों की वासना रूप में स्थित है उसका प्रमाता गोचर अनुभव करता है चर्वण करता है। यहाँ पर जिनके वासना रूप में स्थित है वे सामाजिक कौन है। और जो प्रमाता अनुभव करता है चर्वण करता वह प्रमाता कौन है। वे दोनों एक हैं। या भिन्न हैं यदि एक हैं तब पुनः उसका उल्लेख व्यर्थ है। यदि भिन्न है तब मालूम पड़ता है कि प्रमाता अन्तर्यामी है जों सामाजिक के अन्तःकरण में वासनारूप से विपरिवर्त्तमान रत्यादिका अनुभव करता है और चर्वण करता है। अतः ऐसा उपन्यास करना व्यर्थ ही है। चर्वण या चर्वणा एक ही पदार्थ है जैसे व्यञ्जनात्मपरा क्रिया में व्यञ्जन पाठ भी है व्यञ्जना शक्ति है यह प्रसिद्ध ही है।

और भी बात है कि विभावादि साधारण उपायों के बल से चर्वणा काल में प्रमाता में परिमितित्व विगलित हो जाता है। यह कैसे। यहाँ का आशय यह है कि जैसे नगर महा पालिका आदि संस्थाओं में विधानसभादि सभाओं में स्कूल कालेजादि पाठशालाओं में चयन के द्वारा प्रापणीय पद चयन के पहले सब का है या किसी का भी नहीं है। किन्तु उसकी प्राप्ति के उपाय साधारण हैं। प्राप्त करने वाले भी समान हैं। पद भी समान

## मधुसूदनी

अन्यच्च यस्य यत्कारणं तेन कारणेन तदेव कार्यमुदीते नान्यत्। यतः साधारणीकरणं नाम नायकसामाजिकभेदानुल्लेखनम्। अर्थात् अहं सामाजिकः नायकभिन्न इति ज्ञानं तदानीं नहि भवति। एवं प्रमातरि साधारणोपायबलात् परिमितत्वस्य विगलनं नाम अपरिमितत्त्वस्य उन्मेषः। अस्तु। किन्तु वेद्यान्तरसम्पर्कशून्यत्वं तत्र कथमुन्मिषतु। तादृशशून्यत्वोन्मेषे कारणोपन्यासाभावात्। अत एतेन विशेषणेन न कस्याप्यर्थस्य पुष्टिः।

ननु तादृशविशेषणोपन्यासेन भवतां कोऽभिप्रायविशेषः। माकिं "देवदत्तोऽहं शकुन्तलाविषयकरतिमद्दुःष्यन्तः" इति केषांचिन्मते बुद्धिरुदेति। तत्र

## बालक्रीड़ा

है। कोई भी प्राप्त कर सकता है। अतः समान है। वस्तुतस्तु विना सम्बन्धी के कोई वस्तु नहीं हो सकती है। अतः उनका सम्बन्धी कोई है ही। अन्यथा गगनकुसुमकल्प वस्तु आनन्ददायक नहीं हो सकेगी। क्योंकि चयन के वाद उस पद की प्राप्ति के अनन्तर अनुभव काल में मेरा ही यह पद है मैं ही इस पद का अधिकारी हूँ। यह जैसा होता है वैसे ही यहाँ भी आस्वाद काल में जो आस्वादन करता है वह परिमित ही प्रमाता है यह कथा अलग है कि आस्वाद के समय प्रमाता तन्मय हो जाता है आस्वाद्य के अतिरिक्त कुछ अनुभव नहीं करता है।

इसके सिवाय एक बात और भी हूँ कि विगलन पदार्थ क्या है। परिमित भाव का विगलन माने प्रमाता में अपरिमितभाव का पैदा होना। ऐसी स्थिति में विगलन के वश से अपरिमित भाव का उन्मेष यह कौन उक्ति है। क्योंकि धर्म और अधर्म की तरह परिमितभाव और अपरिमितभाव कोई पृथक् पदार्थ नही है। अपि तु जैसे तेजोऽभाव अन्धकार है वैसे ही परिमित का अभाव अपरिमित भाव है और भी बात है परिमितप्रभातृभाव के विगलन से प्रमाता में अपरिमितभाव वेद्यान्तरसम्पर्क शून्य अर्थात् मैं देवदत्त रत्यादि का आस्वादन करता हूँ ऐसा परिच्छिन्त प्रमाततृत्व आस्वादनकाल में नहीं रहता है यह क्यों। यह कैसे उन्मिषित होगा। उसमे वह भाव ही क्यों वेद्यान्तर सम्पर्क शून्य होता है। अयं रत्यादिः इत्याकारक ज्ञान भी तो वेद्यान्तर सम्पर्क शून्य है कोई विलक्षणता नही है। सुनो भाई। ऐसी बात नहीं है। समूहालम्बन ज्ञान में वेद्यान्तर सम्पर्क भी रहता है। वह यहाँ नहीं है अतः वैसा लिखा। अस्तु। किन्तु रसके विषय में समूहालम्बन ज्ञान नहीं माना है वहाँ तो प्रपाणक रस न्याय माना है। प्रश्न—रस ज्ञानस्वरूप है। रसानुभव काल में रसस्वरूप ज्ञान ही वेद्य है उस से अतिरिक्त वेद्य नहीं है। इस आशय से वैसा लिखा है। उत्तर—यह अंश रसचर्वणा में विशेषण नहीं है अपि तु अपरिमितभाव के उन्मेष में यह विशेषण है। रसको वेद्यान्तर सम्पर्क शून्य बतलाने के लिए तो आपने

त्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मि-

### मधुसूदनी

देवदत्तत्वमहन्त्वं, शकुन्तला, तद्विषयकरतिः, तादृशरतिमत्त्वं दुष्यन्तत्वञ्च प्रति-भान्ति तानि मा प्रतिभुरित्याशयेन तदुदलेखीति वाच्यम्। तत्तु तद्विगलनेनैव जातम् यत एवं प्रतिभाने स्फुटमुद्घुष्यतां यत्साधारणोपायबलेन प्रमातरि परि-मितत्वस्य विगलनमसम्भवीति। तस्मादयमेवंविधोल्लेखोऽसमीचीनः।

### बालक्रीड़ा

स्वाकारवदभिव्यक्त ऐसा लिख ही दिया है। अतः फिर उसको उस तरह लिखना अत्यन्त असंगत है। क्योंकि जिसका जो कारण है उससे वही कार्य पैदा होता है अन्य नहीं। प्रकृत में कारण है साधारणीकरण, उससे सामाजिक और नायक के भेद का तिरोधान होता है। अर्थात् उस समय मैं सामाजिक नायक से भिन्न हूँ यह ज्ञान नहीं होता है। अतः साधारणीकरण रूप उपाय से परिमितत्त्व का उन्मेष होता है। ठीक है। किन्तु कारण के अभाव में वेद्यान्तरसम्पर्कशून्यत्व का उन्मेष वहाँ कैसे होगा। अतः इस विशे-षण से किसी भी अर्थ की पुष्टि नहीं हुई।

प्रश्न—उस विशेषण के उपन्यास करने में आपका क्या अभिप्राय है। अगर कहें कि देवदत्ताभिन्न मैं शकुन्तला विषयक रतिमान् दुष्यन्त हूँ। ऐसा बोध कोई मानते हैं। उनके मत में देवदत्तत्व और अहन्त्व, शकुन्तला और ताद्विषयकरति। तादृश-रतिमत्त्व और दुष्यन्तत्व जो उस ज्ञान में प्रतिभात होते हैं वे न होवें। इस आशय से ऐसा लिखा है। यह भी ठीक नहीं। क्योंकि ऐसे प्रतिभान का नहीं होना तो परिमित प्रमातृत्व के विगलन से ही हो गया। फिर भी यदि ऐसा प्रतिभान होगा तो स्पष्ट कहिए कि साधारणोपायबल से प्रमाता में परिमितत्व का विगलन होना असंभव है। अतः ऐसा उल्लेख ठीक नहीं है।

और भी सुनिये। साधारण्येन प्रतीतैः, साधारणोपायबलात्, साधारण्येन गोचरी-कृत। इसतरह बार २ साधारण पद के उपन्यास का मोह हो गया है। साधारण पद की गुणानिका करा रहे हैं।

कारण के गुणों का अनुबन्धी कार्य होता है अतः साधारण कारणों से साधारण कार्य असाधारण से असाधारण एवं विशिष्ट से विशिष्ट होता है यह सिद्धान्त जागरूक है। प्रकृत में साधारण्य अपेक्षित है। इसके अनुसार साधाण्येन इस एक ही पद का "साधा-रण्येन प्रतीतैः साधारण्येन अभिव्यक्तः साधारण्येन विगलितनियतभावेन प्रमात्रा" इस प्रकार तीनों स्थानों में अन्वय हो जायगा। जैसे-तेजस्वियों के मध्य में अतिदूरस्थ भी तेजस्वी की गणना की जाती है। वैसे ही विभावादि अलौकिक व्यापार की महिमा से उद्भावित साधारण्य का व्यञ्जक विभावादी में व्यङ्ग्य रत्यादि में और उन दोनों के आश्रय प्रमाता में भी समन्वय होगा ही कौन रोकेगा।

षितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीविता-

मधुसूदनी

अन्यच्च साधारण्येन प्रतीतैरिति, साधारणोपायबलादिति, साधारण्येन गोचरीकृत इति किमिति मुहुर्मुहुः साधारणपदोपन्यासमोहः। किमस्य साधारणपदस्य गुणनिका कार्यते।

कारणगुणानुबन्धि कार्यं भवति। ततश्च साधारणैः कारणैः साधारणम्, असाधारणैस्तैरसाधारणम्, विशिष्टैस्तैर्विशिष्टं कार्यं भवतीति राद्धान्तो जागरूक एव। एवं साधारण्येनेत्येकस्य पदस्य त्रिषु समन्वयः। साधारण्येन प्रतीतैः, साधारण्येन अभिव्यक्तः, साधारण्येन विगलितनियतभावेन प्रमात्रेति। यथा—तेजस्विमध्ये तेजस्वी दवीयनपि गण्यते तथा विभावनाद्यलौकिकव्यापारमहिम्नोद्भावितं साधारण्यं व्यंजकेषु विभावादिषु, व्यंग्येषु रत्यादिषु, उभयोराश्रये प्रमातरि च समन्वेत्येव कः प्रतिरोद्धा।

एवमेव अभिव्यक्तः गोचरीकृत इत्यनयोरपि पौनःपुन्यं श्रीमतां मम्मट महाशयानामनुकम्पनमेव। अभिव्यक्तो नाम अभिव्यक्तिगोचरीकृतः। तथा चैकवारं व्यक्तिगोचरीकृत इति लिखित्वा पुनः गोचरीकृतः इति को लेखः। एकस्यार्थस्य स्फोरणार्थं मुहुर्मुहुरुल्लेखे महान् व्यामोहो भवतां तत्र भवताम्।

लिखितास्यार्थस्य पुनरुल्लेखे पुनरुक्तिर्दूषणम्। कथितस्य पदस्य पुनः कथने कथितपदत्वं तत्। एवमत्र पुनरुक्तिकथितपदत्वापुष्टार्थत्वादयो दोषा जागरति।

बालक्रीड़ा

इसी तरह अभिव्यक्तः गोचरीकृतः इन पदों का पौनःपुन्य भी ग्रन्थकारका अनुकम्पन ही है। क्योंकि अभिव्यक्त माने अभिव्यक्ति का विषय अभिव्यक्तिगोचरीकृत ही है। अतः एक वार अभिव्यक्ति का गोचर किया गया लिखकर पुनः गोचरीकृतः लिखने में कौन तुक है। एक ही अर्थ के स्फोरण करने के लिये वार-वार उल्लेख में महान् व्यामोह है। लिखित अर्थ के पुनः उल्लेख में पुनरुक्ति दूषण है। कथितपद के पुनः कथन में कथितपदत्व दोष है। इस तरह यहाँ पुनरुक्ति कथितपदत्व और अपुष्टार्थत्व आदि दोष हैं।

प्रश्न—चर्व्यमाणतैकप्राण और विभवादिजीवितावधि ये किस के विशेषण है। उत्तर। सुनो। ये रस के विशेषण हैं। परन्तु भगवन्! अभिव्यक्तः इसमें कौन अभिव्यक्त हुआ। अरे भाई रत्यादि। वासनात्मतया स्थितः में कौन वासना रूप से स्थित है। रत्यादि। साधारण रूप से प्रमाता के द्वारा साधारण्येन गोचरीकृतः इस में प्रमाता के द्वारा कौन गोचर किया गया। रत्यादि। जब यह स्थिति है तब चर्व्यमाणतैकप्राण भी उसी को कहना चाहिये और विभावादिजीवितावधि भी वही रत्यादि है न कि रस को

वधिः पानकरसन्यायेन चर्व्यमाणः पुरः इव परिस्फुरन् हृदयमिव प्रविशन्

मधुसूदनी

ननु चर्व्यमाणतैकप्राणेति विभावादिजीवितावधिरिति च कस्य विशेषणे। इति चेच्छृणु। रसस्येमे विशेषणे। परन्तु भगवन्तः! अभिव्यक्त इति कोऽभिव्यक्तः? ननु भो रत्यादिः। वासनात्मतया स्थित इति कः स्थितः? स एव रत्यादिः। प्रमात्रा साधारण्येन गोचरीकृतः इति को गोचरीकृतः स एव रत्यादिः। एवं तर्हि चर्व्यमाणतैकप्राणोऽपि स एव वक्तव्यः। विभावादिजीवितावधिरपि च स एव रत्यादिर्निर्देश्यः। न तु रसः। ननु रत्यादिरेव तथास्तु का हानिरिति चेन्न। प्रमदादिभिः स्थायिनोऽनुमाने इति प्रागुक्तस्य का दशा स्यात्। तत्रानुमानविषये रत्यादौ च विभावादिजीवितावधित्वं नास्ति चर्व्यमाणतैकप्राणत्वं च नास्ति। यतोऽनुमितौ रत्यादिः व्याप्तेरुत्तरं लिंगात् पृथक् प्रतीतः। तथा सिद्धश्च सः।

अपरञ्च नियतप्रमातृगतत्वेन स्थितोऽपि तादृशापरिमितभावेन प्रमात्रा गोचरीकृत इति का भाषा। अणु महत् दीर्घं ह्रस्वं च परिमाणं नैयायिकाभिमतं पृथक्। नियतत्वं धर्मश्च पृथक्। तादृशपरिमाणयुक्तस्य परिमितत्वस्याभावः अपरिमितत्वं प्रमातृषु अपेक्षितो नास्ति। किन्तु एकत्र बद्धत्वस्य एकत्रासक्तत्वस्य नैयत्यस्य विरुद्धमेकत्राबद्धत्वमेकत्रानासक्तत्वमनैयत्यमिह अपेक्षितम्।

अन्यच्च प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमेति पाणिनिसूत्राभिमतद्रोणखार्यादिरूपपरिमाणयुक्तत्वस्य परिमितस्याभावोऽपरिमितत्वमपि परिमाणं न

बालक्रीड़ा

लिखना चाहिए। प्रश्न—अस्तु। रत्यादि ही वैसे मान लिये जायँ क्या हानि है। उत्तर—नहीं। ऐसा नहीं मान सकते। क्योंकि ऐसा मानेंगे तो प्रमदादि के द्वारा स्थायी के अनुमान में इस पूर्व में उक्त अंश की क्या दशा होगी। क्योंकि अनुमिति के विषय रत्यादि में चर्व्यमाणतैकप्राणत्व और विभावादिजीवितावधित्व नहीं है। वहाँ सिद्धान्त के अनुसार अनुमिति के विषय होने से रत्यादि व्याप्तिज्ञान के उत्तर काल में लिंग से पृथक् होंगे। और वे सिद्ध होंगे।

नियत प्रमाता में यद्यपि रत्यादि स्थित हैं तद्यपि अपरिमितभाव वाला प्रमाता उसको अनुभव का विषय करता है। यह कौन भाषा है। किसी खास प्रमाता में रत्यादि हैं किन्तु उसका अनुभव करने वालों का परिमितभाव नहीं है यानी परिमाण नहीं है। यहाँ प्रश्न होता है परिमाण पदार्थ क्या है। क्या नैयायिकाभिमत अणु महत् ह्रस्व एवं दीर्घ परिमाण यहाँ अपेक्षित है। किन्तु ऐसा परिमाण प्रकृत में असंगत है

सर्वांगीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः ।

## मधुसूदनी

विवक्षितमसंगतेरसंभवाच्च । तर्हि "अपरिमित" इति पदस्य कोऽर्थः । यदि अपरिमितोऽपरिच्छिन्नः । इत्यर्थः । परिच्छेदश्च संख्यातोऽपि भवति । तेन अपरिमितो नाम बहुत्वसंख्यावच्छिन्नः । तथा च अपरिमितभावेन प्रमात्रेत्यस्य बहुत्वसंख्यापन्नभावेन प्रमात्रेत्यर्थः । तर्हि सामाजिकानामिति प्राक् बहुवचनान्तं पदमुपन्यस्य प्रमात्रेति एकवचनपदोपन्यासे को हेतुः । तेन यदर्थमिदं विशेषणमुपात्तं तन्न सिद्धम् । अन्यच्च सामाजिकानां हृदि वासनात्मतया स्थितं वस्तु अन्यः प्रमाता प्रमिणोति । इति । महदेवेदमन्याय्यं यदन्यदीयं वस्तु अन्यः समास्वदते इति ।

एवं च नियतप्रमातृगतोऽपि तादृशानियतभावेन प्रमात्रेति पाठे भवति मतयोगः अन्यथा यथोक्तरीत्या पाठे तु अभवन्मतयोगत्वदोषो जागर्त्ति । एवमयं श्रीमतां तत्र भवतां मम्मटमहाशयानां सर्वोऽपि पाठो विसंष्ठुलः । संष्ठुलस्त्वेवम्—

लोके प्रमदादिभिः कारणकार्यसहकारिकारणैरनुमितः काव्ये नाट्ये च विभावनानुभावनव्यभिचारणव्यापारवत्वात् कारणत्वदिपरिहारेण अलौकिक विभावादिशब्दव्यवहार्यैस्तैरेव ममैवैते शत्रोरेव एते तटस्थैव एते न ममैव

## बालक्रीड़ा

और असंभव है । इसी दोष के कारण प्रातिपदिकार्थ सूत्र में उक्त द्रोण खार्यादि रूप परिमाण भी यहाँ अपेक्षित नहीं है । यदि अपरिमित का अर्थ अपरिच्छिन्न हैं तब भी ठीक नहीं । क्योंकि परिच्छेद संख्या से भी होता है । तदनुसार अपरिमित यानी बहुसंख्यक यह अर्थ होगा । ऐसी दशा में सामाजिकानाम् बहुवचनान्त पद का उपन्यास करके प्रमाता इस एकवचनान्तपद के उपन्यास करने की कौन तुक है । इस तरह इस विशेषण का कोई प्रयोजन नहीं मिला । यह एक बात हुई ।

दूसरी बात यह है कि नियत शब्द का अर्थ है एक किसी में बद्ध । किन्तु यहाँ अपेक्षित है उसके विरुद्ध एक में अबद्ध । अर्थात् रत्यादि किसी एक में बधे हुए भी बँधे हुए नहीं है । क्योंकि सभी प्रमाता उसका अनुभव करते हैं । यह आशय यहाँ आपको अपेक्षित है फलतः नियत के जवाब में अनियत शब्द का उपन्यास सुन्दर रहता जिसको आपने नहीं किया । अतः यहाँ दोष है अभवन्मतयोगत्व । इस दोष के वारण के लिए "नियतप्रमातृगतोऽपि तादृशानियतभावेन प्रमात्रा" ऐसा पाठ होना चाहिए । इस तरह आरम्भ से लेकर अन्त तक आपका पाठ असंष्ठुल है । अतः यहाँ के लिए अनुकूल संष्ठुल पाठ को मधुसूदनी में देखें ।

स च न कार्यः विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्यः

### मधुसूदनी

एते, न शत्रोरेव एते, न तटस्थस्यैव एते इति सम्बन्धविशेषस्वीकारपरिहार-नियमानध्यवसायात् सकलसहृदयसम्वादभाजा साधारण्येन प्रतीतैरभिव्यक्तः स्ववासनात्मा स्थायी रत्यादिर्नियतप्रमातृभावविगलनपुरःसरोन्मिषितानियत-प्रमातृभावेन प्रमात्रा पानकरसन्यायेन स्वाद्यमानः स्वाकार इवाभिन्नः पुर इव परिस्फुरन्, हृदयमिव प्रविशन् सर्वांगमिवालिंगन्, अन्यत्सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृंगारादिको रस।

एवं पाठकारणे साधारण्येन प्रतीतैरिति। साधारण्येन अभिव्यक्त इति। साधारण्येन नियतप्रमातृभावविगलनपुरःसरोन्मिषितेत्यत्र चान्वयः एकस्यैव साधारण्येनेति पदस्य। एवं पाठकरणे प्रागुक्ता असंगतयो निरस्ताः। तथा च

विभावादिजीविताavधिः स न कार्यं विभावादिनाशेऽपि तस्य संभवप्रसं-गात्। चर्व्यप्राणतैकप्राणश्च स न ज्ञाप्योऽपि वर्तमानकालिकचर्वणा विषयतया सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यंजितश्चर्वणीयः। इति।

### बालक्रीड़ा

इसके वाद "स च न कार्यः" यहाँ का पाठ भी ठीक कैसे हो सकता है। इसको भी मधुसूदनी में देखें।

अब शंका होती है कि विभावादि के संयोग से अभिव्यक्त हुए रत्यादि स्थायीभाव ही रस है। यहाँ विभावादि के संयोग से कहने में मालूम होता है कि विभावादि हेतु है और रस कार्य है रस पैदा होता है। और जो पैदा होता है वह नश्वर। फलतः रस जन्य याने कार्य हुआ तथा नश्वर भी हुआ। किन्तु सिद्धान्त है कि रस जन्य कार्य नहीं हैं रस नित्य है। क्योंकि भग्नावरण चित् के साथ तादात्म्य अर्थात् चिद्रूपता को प्राप्त करने वाले रत्यादि रस है एवं चिद्रूप रस कार्य नहीं है नित्य है परन्तु पूर्व कथनानुसार रस कार्य है और अनित्य है ऐसा प्राप्त होता है वह कैसे ?

इसके तीन राह से उत्तर है। एक अभिनव गुप्त के मतानुसार है। जिसका उल्लेख पण्डित राज ने किया है। अभिनव गुप्त "विभावानुभावव्यभिचारिसंयोगाद् रस निष्पतिः" इस सूत्र की व्याख्या करते हुए लिखते हैं कि "रस, निष्पत्ति एवं ज्ञप्ति व्यापारों से उन्मुक्त है अतः रस उत्पन्न है कार्य है, एवं ज्ञाप्य है ऐसा नहीं कह सकते है। तब कहा कि जब ऐसी ही स्थिति है तब सूत्र में "निष्पत्ति" शब्द का प्रयोग क्यों किया। इस पर उत्तर देते है यह निष्पत्ति रस की नहीं है किन्तु उसके व्यापार रसना की है। उस रसना रूप व्यापार की उत्पत्ति को लेकर रसनैकायत्तजीवित रस की उत्पत्ति भी कह सकते हैं कोई दोष नहीं है।" इसी को पण्डितराज ने एक अंश आवरण भंग को और बढ़ा कर लिखा है। और रसना की जगह चर्वणा पद का विन्यास किया है। व्यञ्जक विभावादि

## मधुसूदनी

अथवा रसो न कार्य इत्यस्य रसत्वं न कार्यतावच्छेदकमित्यर्थः। यतो हि अनावृतचिद्विषयताविशिष्टरतित्वरूपं रसत्वं विशिष्टधर्मत्वान्न कार्यतावच्छेदकम्। आर्थसमाजग्रस्तत्वात्। नहि नीलघटत्वेन नीलकपालत्वेन कार्यकारणभावः। ततो नीलघटत्वं न कार्यतावच्छेदकम्। विशेष्यांशकारणसामग्र्या विशेष्यांशस्य। विशेषणांशकारणसामग्र्या विशेषणांशस्य उपस्थितिः स्यादेवातः विशिष्टस्य कार्यतावच्छेदकत्वं कुतः स्यादिति भावः।

## बालक्रीड़ा

के द्वारा चर्वणा अर्थात् व्यञ्जना नामक व्यापार उत्पन्न किया जाता है। उससे आनन्दांश के आवरण का भंग होता है। इन चर्वणा एवं आवरणभंग रूप व्यापारो में रहने वाले उत्पत्ति एवं विनाश का उपचार व्यापारी रस में कर लेते है।

जैसे वर्ण को नित्य मानने वाले मीमांसक के मत में होता है। उनका मत है कि हृदय में उठी हुई वायु यथाक्रम कण्ठ तालु आदि स्थानों से टकराती है तब वर्णों की अभिव्यक्ति होती है। यह वायु का टकराना यह वायु का आघात रूप व्यापार ही उत्पन्न एवं विनष्ट होता है। इस व्यापार में रहने वाले उत्पत्ति एव विनाश का आरोप वर्णो में करने से वर्णों को उत्पन्न हुए एवं विनष्ट हुए कहते है वस्तुतः वर्ण नित्य है।

दूसरा उत्तर है कि "विभावादि के संयोग से" इस पंचमी विभवित के वदौल्त रस को विभावादि का कार्य समझना भूल है क्योंकि काव्य से समर्पित विभावादि से स्थायी रत्यादि पैदा नहीं होते हैं वे तो पहले से ही सामाजिक के हृदय में वासनारूप से स्थित हैं। वे ही रस बनते हैं तस्मात् रस कार्य नहीं है।

तीसरा उत्तर यह है कि कदाचित् काव्योपस्थापित विभावादि से भी स्थायी पैदा हो सकते हैं ऐसा माने तब कहते है कि रस कार्य नहीं है कि "रस कार्य नहीं है" इसका आशय यह है कि रसत्व कार्यतावच्छेदक नहीं है। क्योंकि रसत्व अनावृतचिद्विषयता विशिष्ट रतित्वरूप होने से विशिष्ट धर्म है और विशिष्ट धर्म आर्थसमाजग्रस्त होने से कार्यतावच्छेदक नहीं होता है जैसे नीलघटत्व एवं नील कपालत्व में कार्यकारणभाव नहीं है, अतः नीलघटत्व कार्यतावच्छेदक नहीं है। क्योंकि विशेष्यांशघट की कारणसामग्री से विशेष्यांश की उत्पत्ति हो जायगी और विशेष्यांश नील की कारण सामग्री से विशेष्यांश की उत्पत्ति हो ही जायगी तब क्यों विशिष्टत्व को कार्यतावच्छेदक माना जाय, उसी तरह रसत्व कार्यतावच्छेदक नहीं है।

कहने का अभिप्राय है कि जब तक आनन्दांश के ऊपर से आवरण भंग नहीं होगा तब तक विभावादि के संयोग से व्यञ्जना के प्रादुर्भाव हो जाने मात्र से रसानुभूति नहीं होती है। जैसे दीपक के जलाने पर भी वस्तु के ऊपर जब तक प्रकाश नहीं पड़ेगा तब तक वस्तु मालूम नहीं होगी।

सिद्धस्य तस्यासम्भवात्, अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारक

## मधुसूदनी

ननु विभावादिसंयोगाद्रसः। तत्र संयोगादित्युक्तौ विभावादिर्हेतू रसो हेतुमान् कार्यं इति चेदाह-स चेति। स च रसश्च न कार्यो न जन्यः। ननु कुतो न कार्यं इति तत्र हेतुमाह-विभावादिति। विभावादिविनाशेपि विभावादिरूपकारणविगमेऽपि तस्य रसस्य संभवप्रसङ्गात् प्रतीतिविषयत्वापत्तेः। परं विभावादिनाशे संभवो नास्ति। ननु तदपि कुतो नेत्याह-विभावादिजीवितावधित्वात्तस्य तथात्वं न। यावत्तैलं तावद् व्याख्यानमिति भावः। अथवा स्थायी भावो रसः स्मृत इत्युक्तेः स्थायी रत्यादिरेव रसः। स च रत्यादिश्च विभावादिभिः कार्यो जन्यो न। यतः स सामाजिकानां हृदये वासनारूपतया पूर्वंत एव स्थितः। एवञ्च रत्यादेर्जन्यत्वाभावे रसोऽ पि न जन्य इति भावः।

नापि ज्ञाप्य इति। पूर्वसिद्धो हि घटादिर्यथा ज्ञाप्यतेऽन्यथा। न तथा च पूर्वसिद्धस्य रसस्य असंभव एव। ननु सिद्ध एव सः। यतः सामाजिकानां हृदये वासनारूपतया पूर्वंत एव स्थितो रत्यादी रस इति चेदाह-चर्व्यमाणतैकप्राणत्वादिति। वर्त्तमानकालिकचर्वणाविषयत्वात् भूतपूर्वत्वाभावेन असिद्धतया ज्ञाप्यो रसो नास्ति इत्यर्थः। अत एव व्यञ्जितः साधारण्येन प्रतीतैः विभावादिभि-

## बालक्रीड़ा

"विभावादि के संयोग से" इस पंचमी विभक्ति के बदौलत रस विभावादि का कार्य है यह समझना ठीक नही है। क्योंकि कार्य का कोई कारण होता है। वे कारण तीन हैं समवायी असमवायी और निमित्त। इनमें से विभावादि यदि कारण होंगे तो निमित्त ही कारण होंगे। किन्तु देखा गया है कि निमित्त कारण के नष्ट होने पर भी कार्य नष्ट नहीं होता है। जैसे तुरी एवं वेमा के नष्ट होने पर भीं पट नष्ट नही होता वह बना ही रहता है। वैसे ही विभावादि के नष्ट होने पर भी रस नष्ट नही होगा बना ही रह जायगा। किन्तु रस का और विभावादि का स्वरूप ऐसा नहीं है। यहां तो विभावादि का जीवित ही रस के जीवित का अवधि है। अर्थात् विभावादि का अनुभव काल ही रस के अनुभव का काल है। और कार्य एवं कारण में पूर्वापरीभाव होता है। कारण पहले रहता है और कार्य बाद में होता है किन्तु रसकी प्रतीति विभावादिसम्वलित है अतः विभावादि समकालिक होने से रस कार्य नहीं है। अस्तु। रस यदि कार्य नही है तब कहिये कि रस ज्ञाप्य है इस पर कहते हैं कि नहीं। रस ज्ञाप्य भी नहीं है। क्योंकि ज्ञाप्य वह पदार्थ होता है। जो ज्ञापक के द्वारा ज्ञापित करने से पहिले ही सिद्ध रहता है। किन्तु रस पूर्व सिद्ध नही हैं। अभिवादि से व्यञ्जित होकर ही चर्वणीय है क्योंकि वह चर्व्यमाणतैकप्राण है। अर्थात् विभावादि से व्यक्त हुआ वह विभावादि की चर्वणा के काल में ही चर्वणीय होता है। दोनों की चर्वणा का समय एक है अतः

ज्ञापकाभ्यामन्यत् क दृष्टमिति चेत्, न कचित् दृष्टम् (?) (कार्यज्ञाप्याभ्यामन्य त्क्व दृष्टमिति चेत्, न क्वचित्) इत्यलौकिक (त्व) सिद्धेर्भूषणमेतन्न दूषणम्।

## मधुसूदनी

र्व्यक्तिविषयीकृतः चर्वणीयः आस्वादनीयः। विभावादिप्रादुर्भूतव्यञ्जनया आनन्दांशगतस्यावरणस्य भङ्गे सत्येव रसानुभूतिरिति तात्पर्यम्। अतोऽत्रैव क्रमशो विभावापादिजीवितावधिरिति चर्व्यमाणतैकप्राण इति च पाठः समुचितो न तु पूर्वत्र यथा मुद्रितः। इति। रसो विभावादिनिरूपितकार्यत्वाभाववान् विभावादिसम्वलितावभासत्वात् पानकरसवत्।

ननु पूर्वत्र रसो न कार्यः; नापि ज्ञाप्यत्युक्तम् किन्तु लोके कार्यं सुखं स्व कारणैः सह नैकस्यां संविद्यवभासमानं दृष्टम्। एतच्च विभावादिसम्वलितं रसज्ञाने तथा दृष्टमत एव समनन्तरमेव उत्तरत्र कार्योऽप्युच्यताम्; प्रत्येयोऽप्यभिधीयतामिति च वक्ष्यते। एवं रसविषयककार्यत्वज्ञाप्यत्वसम्वन्धिनो निराकारणस्वीकरणयोः प्रसङ्गे मध्ये कारकज्ञापकाभ्यामन्यत् क दृष्टमिति चेत् न कुवचिद् दृष्टमित्येवं कारकरूपस्य ज्ञापकरूपस्य च कारणस्योल्लेखने को नु अभिसन्धिः। अपि तु अनुचितमेवैतत्। यदि तु प्रस्तुतविषयसमर्थनाय लेखनमावश्यकं तदि एवं लेखनोयम् "कार्य्यज्ञाप्याभ्यामन्यः (पदार्थः) क दृष्ट इति चेत् न कुवचित्" इति एव। न तु भवदीयरीत्या।

## बालक्रीड़ा

पूर्वसिद्ध नहीं होने से रस ज्ञाप्य नहीं है। यहाँ कारकज्ञापकाभ्यां इत्यादि पाठ अशुद्ध है आरम्भ में कार्य और ज्ञाप्य का निराकरण और अन्त में स्वीकरण है तब बीच में पूर्वापर संगति रहित यह पाठ कैसा। प्रश्न—विश्व में दो ही तरह के तो पदार्थ होते हैं। एक कार्य यानी जन्य दूसरा ज्ञाप्य। इन से अन्य तो कोई पदार्थ होता नहीं है क्या आप ने लोक में इनसे अन्य कोई पदार्थ कहीं पर देखा है। अगर कहीं पर देखा होतो बताइये। उत्तर—नहीं। कहीं नहीं देखा है। बस यह लोक में कहीं पर नहीं देखना ही तो इसमें अलौकिकत्व की सिद्धि करता है और यह सिद्धि यहाँ भूषण ही है दूषण नहीं है यहाँ अलौकिकत्वसिद्धेः यह त्वघटित पाठ है। प्रश्न—जब रस कार्य या ज्ञाप्य नही है तब उसको कार्य या ज्ञाप्य कैसे कहते हैं। उत्तर। सुनो। जैसे वर्ण नित्य है तब भी उत्पन्नः कः। विनष्टः कः यह प्रतीति होती है क्यों होती है। उसका कारण है हृदय से उठी हुई वायु कण्ठ तालु आदि में टकराती है यह टकराना रूप व्यापार ही उत्पन्न एवं विनष्ट होता है। बस। इस व्यापार में रहने वाले उत्पत्ति एवं विनाश का आरोप वर्णों में कर लेते हैं अतः वर्णों को जैसे उत्पन्न एवं विनष्ट कहते हैं वैसे ही चर्वणा रूप व्यापार की निष्पत्ति होती है और उस व्यापार में रहने वाली निष्पत्ति का आरोप रस में करलेते हैं अतः रस

चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभि-

## मधुसूदनी

स्वसंवेदनगोचर इति। इदं रहस्यम्। "स्वानुभूत्येकमानाय" इत्यत्र स्वस्य जीवस्य अनुभूतिरनुभवः अन्तःकरणवृत्तिः सैव मानं प्रमाणं यस्मिन् तस्मै इत्येवं ब्रह्म प्रमेयं जीवः प्रमाता अनुभूतिः प्रमाणमन्तःकरणवृत्तिरिति मानपदानुरोधाद् यथा संगृह्यते तथैवात्रापि गोचर इतिपदानुरोधात् स्वस्य सामाजिकस्य संवेदनमनुभवोऽन्तकरणवृत्तिस्तस्या गोचरो विषयः। वृत्तौ ज्ञानत्वोपचाराद् विषय इत्युच्यते। इति बोधः। वस्तुतस्तु पूर्वत्र स्वात्मिका यानुभूतिश्चित् तदेकसिद्धाय इत्यर्थः। अत्रापि रसो ज्ञानरूपः स्वात्मिका सा ज्ञानरूपा वेद्यान्तरं नास्ति अतः स्वात्मकं यत्सवेदनं चित् तदेव गोचरः रसस्य संविद्रूपत्वात्। इति। एवमेव प्रदीपकाराक्षराण्यपि अनुसन्धेयानि। तथाहि-किंच स्वभिन्नतज्जन्यज्ञानविषयो हि तज्ज्ञाप्य उच्यते। अस्यार्थः। स्वं ज्ञाप्यत्वेन अभिमतः। तत्पदार्थो ज्ञापकः प्रदीपादिः विभावादिश्च। यथा स्वं घटः। तद्भिन्नं यत् प्रदीपजन्यं घटविषयकं ज्ञानं तद्विषय एव घटो न तु प्रदीपजन्यज्ञानरूपो घटः। तथा रसो नास्ति। रसस्तु ज्ञानस्वरूपोऽतः स्वं रसः। तद्भिन्नं यद्विभावादिजन्यं ज्ञानं तन्न। इत्यर्थः। विभावादिजन्यज्ञानाद्भिन्नो रसो न। भिन्नस्यैव ज्ञाप्यत्वाद्रसो न ज्ञाप्यः। स्वभिन्नतज्जन्यज्ञानविषयतया एव स्वं रसः तदभिन्नं यद् विभावादिजन्यं ज्ञानं

## बालक्रीड़ा

को कार्य भी कह सकते हैं। इसी तरह रसको ज्ञाप्य भी प्रत्येय भी कह सकते हैं। क्योंकि रस स्वसंवेदन का गोचर विषय होता है। यहाँ स्व का अर्थ है रस और रस संवेदन रूप है ज्ञान स्वरूप है। अतः रसरूप संवेदन का विषय रस है अर्थात् रस अपने ही से जाना जाता है दूसरे से वह प्रकाश्य नहीं है अतः ज्ञाप्य है। और वह स्वसंवेदन से अन्य जो त्रिविध ज्ञान है उनसे विलक्षण है भिन्न है अतः लोकोत्तर है। वे त्रिविध ज्ञान कौन है इसको कहते हैं—"लौकिक"।

यहाँ का सार यह है कि रस का संवेदन अलौकिक है जो विभावादि के संयोग से होता है अतः लौकिक प्रत्यक्ष अनुमान उपमान आगमादि प्रमाणों से जनित ज्ञान १ (युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः" युक्त योगारूढ योगी को सर्वकाल में भान होता है और अपर युञ्जान योग में संलग्न योगी को समाधि की सहायता से।) अतः ताटस्थ्य से यानी लौकिक प्रमाणों से उदासीन होकर समाधि के द्वारा प्राप्त अवबोधशाली मित योगी के ज्ञान २ वेद्यान्तरसंस्पर्श रहित यानी सकल वैषयिक उपराग से शून्य एवं स्वात्ममात्रपर्यवसित शुद्ध स्वात्मानन्दैकघन अनुभव में संलग्न परिमितेतर युक्त योगी के ज्ञान

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमन-गमनयोर्न विरोधः।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिंगन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥ ३४० ॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोंऽगम्, तस्य तु शृंगारः, तथापि न करुणे विश्रान्तिरिति तस्यांगतैव। अथवा प्राक् यथा कामुक आचरति स्म तथा शराग्निरिति शृंगारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते। उक्तं हि—

## बालक्रीड़ा

चाहते हो। चुप रहो जी मत बोलो। इस प्रकार धनी लोग आशा रूपी ग्रहों से ग्रस्त याचक लोगों से क्रीड़ा करते हैं। यहाँ आओ इस प्रकार क्रीडा करते हैं। जाओ इस प्रकार क्रीडा करते हैं इस प्रकार क्रीडा की अपेक्षा से गमन एवं गमन के अभाव में कोई विरोध नहीं है।

सेनापति एवं उसके भृत्य की तरह दूसरे के अंग बन जाने से निर्विरोध हुए दो रस व्यक्तियों का उदाहरण जैसे—क्षिप्तः। त्रिपुर के दाह के समय भगवान् शम्भु के शर से उत्पन्न हुआ यह अग्नि हमारे तुम्हारे एवं सबके दुरितों को जला दे। जिस अग्नि को त्रिपुर युवतियाँ तत्काल अपराध करने वाले कामी की तरह हाथ के छूने पर फटकार देती हैं। जबरन् साड़ी के छोर को पकड़ लेने पर मार देती है। केशों को ग्रहण करने पर दूर हटा देती है। चरणों में पड़े हुए को संभ्रम घबड़ाहट के कारण आदर की दृष्टि से देखती ही नहीं है।

यहाँ त्रिपुर को जलाने वाले अतएव उसके वैरी भगवान् शम्भु के अतिशय प्रभाव में करुण अङ्ग हो गया है। और उस करुण का शृंगार अङ्ग हो गया है। यद्यपि शृंगार करुण का अंग है तद्यपि यह नही है कि उस शृंगार की करुण में विश्रान्ति हो गई है। इस लिये वह शृंगार अंग ही है। अथवा पहले कभी जैसे कामी आचरण करता था वैसे ही शराग्नि भी आचरण करता है इस तरह शृंगार से पुष्ट हुए करुण के द्वारा मुख्य ही अर्थ उपोद्बलित होता है। इस विषय में कहा भी है कि गुणः। स्वयं नष्टः परान् नाशयति एक कहावत है कि जो स्वयं नष्ट है असमर्थ है अर्थात् योग्यता के नहीं होने से स्वयं कार्य करने की क्षमता से रहित है उसको यदि किसी जगह पर नियुक्त कर दिया जायगा तो वह दूसरों को नष्ट ही कर देगा। हाँ यदि वह आत्मसंस्कार से सम्पन्न हो जाता है अर्थात् योग्यता को प्राप्त कर लेने से सक्षम हो जाता है तब यदि वह प्रधान को प्रतिपन्न होता है तो ऐसी हालत में यह प्रधान का महान् उपकार करता है।

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ।

प्राक्प्रतिपादितस्य रसस्य रसान्तरेण न विरोधो नाप्यंगांगिभावो भवति इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तमोल्लासः ॥ ७ ॥

बालक्रीड़ा

पहिले बतलाये हुए रसों के विरोध में यह निर्देश करना आवश्यक है कि रस आनन्द स्वरूप हैं अतः एक आनन्दमय का दूसरे आनन्द मय के साथ विरोध सम्भव नहीं है । और दूसरी बात यह है कि रस तभी कहलाता है जब वह प्रधान होता है ऐसी स्थिति में प्रधान भी हो और अङ्ग भी हो यह भी उचित नहीं है अतः उन रसों में अङ्गांगीभाव भी नहीं हो सकता है । इस लिए यहाँ इस प्रकरण में रस शब्द से रस के स्थायी भावों का उपलक्षण है ऐसा समझना चाहिए । यह सिद्धान्तभूत मत नहीं है हाँ एक मत है । सिद्धान्तभूत मत यह है कि जिनके यहाँ एक रस दूसरे रस का व्यभिचारी होता है । उनका आशय है कि चित्तनिष्ठ बहुत से भावों यानी चित्तवृत्तियों के मध्य में जिस भाव का चित्तवृत्ति का रूप बहु यानी वाक्य व्यापक या प्रबन्ध व्यापक हो जाय वह भाव स्थायी है अतः रस है क्योंकि स्थाय्येव रसो भवेत् इस सिद्धान्त के अनुसार स्थायी ही रस होता है । और जिन भावों का रूप बहु यानी प्रबन्ध या वाक्य व्यापक नहीं होता है वे भाव संचारी होते हैं अतः आधिकारिक इतिवृत्त व्याप्त चित्तवृत्ति अवश्य ही स्थायी होती है और व्यभिचारी भाव का उसमें विरोध नहीं है । इन रसों में कोई रस स्थायी और कोई रस व्यभिचारी होते हैं । जैसा कि नाट्यशास्त्र में कहा है—रसान्तरेष्वपि रसा भवन्ति व्यभिचारिणः ।

तथा हि हासः शृंगारे रतिः शान्ते च दृश्यते ।
क्रोधो वीरे भयं शोके जुगुप्सा च भयानके
उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणः ॥ इति

ये दोनों मत ध्वन्यालोक में है ।

इति काव्यप्रकाश के सप्तम उल्लास की बालक्रीड़ा समाप्त हुई ।

---

## अथाष्टमोल्लासः

एवं दोषानुक्त्वा गुणालंकारविवेकमाह—

बालक्रीड़ा

अब दोषों के निरूपण के बाद "तददोषौ शब्दार्थौ सगुणौ सालंकारौ" इस काव्य लक्षण में कहे हुए उद्देश क्रम के अनुसार गुणों का निरूपण करना चाहिए किन्तु कुछ लोगों के "गुण एवं अलंकार काव्य का उत्कर्ष करते हैं" इस कथन के अनुसार दोनों की स्वरूपगत एकता प्रतीत होती हैं इसके निराकरण करने के लिए उनमें विवेक करते हैं ।

(८७) ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥६६॥

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात्, 'आकार एवास्य शूरः' इत्यादेर्व्यवहारादन्यत्राशूरेपि विततकृतित्वमात्रेण 'शूर' इति। क्वा

## मधुसूदनी

ये रसस्येति। अत्र रसस्य उत्कर्षहेतवो गुणा इति तु सुस्थं, परं रसस्य धर्मा इति अचलस्थितय इति च चिन्ताविषयौ। तथाहि—सर्वं वाक्यं सावधारणं भवतीतिन्यायात् रसस्यैव नान्यस्य धर्मा इत्यर्थः स्यात्। तेन वस्तुध्वनौ अलंकारध्वनौ गुणा न स्युः। अपेक्ष्यन्ते तु ते त्रिष्वपि रसवस्त्वलंकारध्वनिषु। तत्र वस्तुध्वनौ गुणसद्भावो यथा—तरुण्यालिंगितः कण्ठे नितम्बस्थलमाश्रितः
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः।

अत्र घटरूपं वस्तु व्यज्यते। कोऽपि रसो नास्ति। माधुर्यप्रसादौ गुणौ स्तः। अन्यच्च—स्वच्छन्दोच्छलदित्यत्र गङ्गालम्बनकः कविहृदयगतो रतिभावः। अत्र ओजो गुणः स चोक्तभावविरुद्ध एव। नन्विदमवरं काव्यम्। तेनात्र यद् व्यग्यं तच्छब्दचमत्कारे लीनमतो वर्त्तमानोऽपि गुणो नानुसन्धीयते इति चेत्तर्हि रसं विना ये नावतिष्ठन्ति स्थिताश्चावश्यमुत्कर्षयन्ति इत्येवरूपं तेषामचलस्थितित्वं भग्नम्। तस्मात्

ये ध्वनेरंगिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतुवस्ते स्युर्गुणा विद्धद्भिरीडिताः। इति। पाठः साधीयान्

## बालक्रीड़ा

ये रसस्य। जैसे आत्मा में शौर्य औदार्य आदि धर्म हैं उसी तरह जो अङ्गी रस के धर्म है वे उत्कर्ष के हेतु एवं नियमतः रहने वाले गुण हैं। इसका मतलब हुआ कि जो रस के विना नहीं रह सकते और जब रहते हैं तब अवश्य उसका उपकार करते हैं। इस प्रकार जो उत्कर्षक होते हुए रस के धर्म हों रस में अव्यभिचार से रहते हो और अवश्य उसका उपकार करते हों वे गुण होते हैं ऐसा लक्षण निष्पन्न हुआ। यद्यपि अलंकारों के भेदक बीज का उपन्यास आगे करेंगे तद्यपि इससे इतना अवश्य मिल गया कि जो रस के धर्म नहीं हैं वे अलंकार है क्योंकि शब्दालंकार शब्द के और अर्थालंकार अर्थ के धर्म होते हैं।

जैसे शौर्यादि आत्मा के ही धर्म होते हैं आकार के नहीं वैसे ही जो रस के ही न कि वर्णों के धर्म होते हैं वे माधुर्यादि गुण हैं। कहीं पर तो शौर्यादि के समुचित आकार के महत्व को देखकर लोग कहते हैं कि देखने से ही मालूम पड़ता है कि यह व्यक्ति शूर है वीर है इसका तो आकार ही बतलाता है कि यह शूर है। इसका फल

पि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति अविश्रान्तप्रतीतयो यथा व्यहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादे-रमाधुर्यादि, रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति। अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं तथो-दाहरिष्यते। ८९

## मधुसूदनी

मधुरेति। अत्र मधुरादिव्यञ्जकेत्यारभ्य व्यवहरन्तीति पर्यन्तः पाठः शौर्यादिसमुचितेत्यारभ्य यथा व्यवहरन्तीति पर्यन्तस्य पूर्वलिखितपाठस्य सध्रीचीनो नास्ति। तत्र यथा प्राक् गुणस्य शौर्यस्य ततस्तद्व्यञ्जकस्य आकारमहत्वस्य तदनन्तरं व्यवहारस्य आकार एवास्य इत्यस्योल्लेखः कृतः। तथैव अत्रापि पूर्वं गुणस्य माधुर्यादेस्ततस्तद्व्यञ्जकानां सुकुमारवर्णानां तदनन्तरं वर्णा एवास्य मधुरा इति व्यवहारस्योल्लेखः करणीयः। एवं करणे एव पाठयोः सध्री-चीनता स्यादन्यथा तु सा कथं स्यात्। यतः वर्णा गुणानां व्यञ्जका गुणा रसेषु श्रिताः इति। अत एव भवान् माधुर्यं शृंगारे इति ओजो वीररसस्थितीति प्रसादः सर्वत्र विहितस्थितिरिति माधुर्यायो रसधर्माः समुचितैर्वर्णव्यंज्यन्ते इति च समुल्लिलेख। तस्मात् मधुरादिव्यंजकसुकुमारादिवर्णानामिति अमधुरादिरसा-ङ्गानां वर्णानामिति रसोपकरणानां तेषामिति च पाठोऽसङ्गतः। अन्यच्च वर्णानां माधुर्यं, तेषामाधुर्यादि व्यवहरन्ति इति च कः पाठः का सङ्गतिः। शौर्यादिव्यञ्ज-कमाकारमहत्वं दृष्ट्वा आकारः शूरः इति यथा व्यवहारः। तथा माधुर्यव्यञ्जकान् वर्णान् बुध्वा वर्णा मधुरा इति व्यहारः। इत्येवं पूर्वापरसङ्गतलेखनेनैव भवतां वाग्देवतावतारत्वं स्यादन्यथा कथं तत्। अत एवंविधः पाठोऽत्र साधीयान्— "माधुर्यादिसमुचितस्य वर्णसौकुमार्यादेर्दर्शनात् वर्णा एवात्र मधुरा इत्यादि व्यवहारप्रवृत्तेः। अन्यत्र अमधुरेऽपि वर्णसौकुमार्यादिमात्रेण मधुर इति। क्वापि मधुरेऽपि वर्णासौकुमार्यादिमात्रेण अमधुर इति रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति" इति। रसपर्यन्तं रसं यावत् विश्रान्तायाः विश्रामं कुर्वाणायाः प्रतीतेः सम्बन्धे बन्ध्या निष्फलाः जनाः। सम्बन्धोऽत्र विषयविषयिभावः।

## बालक्रीड़ा

होता है वितत आकृति को देखकर जो शूर नहीं है उसमें भी यह शूर है वीर है ऐसा व्यवहार लोग करने लगते हैं। और कहीं पर शरीर के हल्केपन को देखकर जैसे शूर में भी यह अशूर है ऐसी अविश्रान्त प्रतीतियाँ होती हैं। तदनुसार वे व्यवहार भी करते हैं। उसी तरह मधुरादि को व्यक्त करने वाले सुकुमारादि वर्णों में मधुरादि व्यवहार की प्रवृत्ति होती है और अमधुरादि रसों के अंग वर्णों में केवल सौकुमार्य को देखकर माधुर्य के व्यवहार करने की प्रवृत्ति होती है तथा मधुरादि रसों के उपकरण उन वर्णों

(८८) उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥६७॥

मधुसूदनी

उपकुर्वन्तीति। इदमलंकारलक्षणम्। अतः उपकुर्वन्तीति पदं कथं संगतिमत्। तथाहि—अलंकारा अनुप्रासोपमादयः काव्यमलंकुर्वन्ति। यथोच्यते काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते इति। अत्र उपात्प्रतियत्नेति सूत्रेण उपपूर्वकात् कृञः भूषणेऽर्थे सुड् भवति। तेन उपस्कृता कन्या अलंकृतेतिवत् अलंकुर्वन्ति भूषयन्ति इत्यर्थे उपस्कुर्वन्ति इत्येव पदं साधु न तु उपकुर्वन्ति इति। सन्तमिति। इदमुपस्कार्यस्य रसस्य विशेषणत्वेन उपादीयते। तत्र विशेषणं च तदेव सार्थकं भवति यत् सम्भवति व्यभिचरति च। यथोच्यते—सम्भव-व्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति। यतो हि रसो वा वस्तु वा अलंकारो यः कोऽपि स सन्नेव भूष्यः न तु असन्नपि। योऽस्त्येव न हि स कथं भूष्यः। अतो भूषाकाले भूष्यस्योष्णत्वमिवाग्नेः सत्त्वे न व्यभिचारोऽतः सन्तमित्यपि विशेषणं रसेऽर्थवत्वाभावे तथैव। जातुचिदिति। भूष्योऽस्ति भूषणं कदाचित्तं भूषयति अर्थात् एतादृशी अपि स्थितिर्भवति यदा तं भूष्यं तन्न भूषयति। इति वदतो व्याघातः। सत्यपि भूष्ये यदि भूषणं तं न भूषयति तदि वक्तव्यं स भूष्यो नास्ति तच्च भूषणं नास्ति। भूष्यस्य भूष्यत्वं तदैव यदा स भूषणेन भूष्यते नान्यथा। एवमेव भूषणस्य भूषणत्वमपि तदैव यदा तद्भूषणं तं भूष्यं भूषयति नान्यथा। यतः साधारणो भूषणभूष्यभावः। एकस्य भूष्यत्वे सत्येव अपरस्य भूषणत्वम्। अपरस्य भूषणत्वे सत्येव एकस्य भूष्यत्वम्। एवं हि अनयोः कस्यापि अतथात्वे स भावोऽपगच्छति। अतो जातुचिदपि परं तादृशमेव।

यच्चास्मिन्नवसरे भवता उदाहारि "चित्ते विहट्टदि" इति तत्तु न सध्यूङ्। यथा कश्चिद् आर्तस्तु ज्वरेण, औषधं सेवन्तेऽतिसारघ्नम्। तथापि स यदि ब्रयात् औषधं सेवितं व्याधिर्नापगतः इति। तथैव भवतामपि कथनम्। यत्

बालक्रीड़ा

में असौकुमार्य को देखकर अमाधुर्य का व्यवहार होता है किन्तु वह व्यवहार रस पर्यन्त विश्रान्त होने वाली प्रतीतियों से रहित ही है इसी लिए प्रतीत होता है कि माधुर्यादि रस के ही धर्म हैं जो समुचित वर्णों से व्यक्त होते हैं किन्तु वर्णों में नहीं रहते हैं। ये वर्ण जिस तरीके से व्यञ्जक होते हैं उसका उदाहरण आगे चलकर लिखेंगे।

अब गुणों के लक्षण के कहने के बाद अलंकारों के स्वरूप को कहते हैं—उपकुर्वन्ति। जो धर्म अंगी रस के अंगभूत शब्द एवं अर्थ के द्वारा यानी उनको उत्कृष्ट करके उसमें रहने वाले रसका कदाचित् ही नियमतः नहीं उपकार करते हैं वे अनुप्रास एवं उपमा आदि हारादि के सदृश अलंकार कहलाते हैं। उनमें जो शब्द में रहते

ये वाचक-वाच्य-लक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। कंचित्तु सन्तमपि नोपकुर्वन्ति। यथाक्रममुदाहरणानि—

अपसारय घनसारं दूर एव किं कमलैः।
अलमलमालिमृणालैरिति वदति दिवानिशं बाला ॥ ३४१ ॥

इत्यादौ वाचकमुखेन।

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम्
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।

मधुसूदनी

"चित्ते" इत्यादौ परुषवर्णारब्धः अत एव ओजोव्यञ्जकष्टवर्गानुप्रासो वाचकमेव उपस्करोति न तु सन्तपपि विप्रलम्भश्रृंगारं रसमिति। भगवन्! वाग्देवतावतार! ज्वरार्त्तस्य कस्यचिज्ज्वरो यर्हि ज्वरघ्नेनौषधेन नापह्रियेत तर्हि वक्तव्यमौषधं सेवितं ज्वरो नापगत इति। एवं सुकुमारवर्णारब्धो माधुर्यव्यञ्जकानुप्रासो यर्हि विप्रलम्भश्रृङ्गारं रसं नोपस्कुर्यात्तर्हि वक्तव्यं चित्ते इत्यादौ सोऽनुप्रासो वाचकमेव न तु रसमुपस्करोतीति। को वाऽस्ति यः स्वप्रतिकूलस्य कृते आनुकूल्यं भजति। यस्तदङ्गभूतस्तथापि तदङ्गतां न भजते तदा दूषणं स्यात्तस्मादेवं पाठः साधीयान्।

उपस्कुर्वन्त्यलंकार्यं येऽङ्गद्वारेण तत्पराः
हारादिवदलंकारास्तेऽनुप्रासोपमादयः। इति

एवं सति—रसभावादितात्पर्यमाश्रित्य विनिवेशनम्
अलंकृतीनां सर्वासामलंकारत्वसाधनम्।

इति ध्वनिकारराद्धान्तश्च आराधितो भवति।

बालक्रीड़ा

हैं वे अनुप्रास वगैरह हैं और जो अर्थ में रहते हैं वे उपमा आदि हैं। वाच्य एवं वाचक लक्षण अंगों में अतिशय का आधान करके उनमें रहने वाले मुख्य रस का उपस्कार करते हैं वे कण्ठ प्रभृति अंगों में उत्कर्ष का आधान कर के शरीरी जीवात्मा का उपस्कार करने वाले हारादि की तरह अलंकार होते हैं। जहाँ तो रस नहीं है वहाँ केवल उक्ति की कहने के तरीके की विचित्रता में ही उनका पर्यवसान होता है। और कहीं पर तो ये रहने वाले भी रस का उपस्कार नहीं करते हैं। क्रमशः उदाहरण लिखते हैं। अपसारय।

हे आलि! कपूर को हटावो। हार को दूर करो। कमलों से क्या फायदा है। बस बस मृणालों से क्या होना है। इस प्रकार बाला रात दिन बोलती रहती है। यहाँ रेफानुप्रास वाचक के द्वारा विप्रलम्भश्रृंगार को उपस्कृत करता है।

मनोरागः। हे सखि! यह मेरा मनोराग तीव्र विष की तरह निरन्तर फैल

हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवति ॥ ३४२ ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसुं सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
वोलम्मि वट्टदि पवट्टदि कव्वबन्धे झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥३४३॥
इत्यादौ वाचकमेव ।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥३४४॥

इत्यादौ वाच्यमेव न तु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा ।

### बालक्रीड़ा

रहा है । और धौंकनी से जलाये गए अत एव निर्धूम हुए अग्नि की तरह यह अत्यन्त जल रहा है । यह इनता बढ़ गया है कि ज्वर की तरह प्रत्येक अंग को ध्वस्त कर रहा है इसलिए यहाँ देखो चाहे वहाँ देखो ! न आप न माता जी एवं न पिता जी कोई भी मुझको बचाने में समर्थ हैं । यहाँ उपमा अर्थ को उत्कृष्ट करके रस को उत्कृष्ट करती है ।

चित्ते । चित्ते विघटते न त्रुटयति सा गुणेषु शय्यासु लोटति विसर्पति दिङ्मुखेषु । वचने वर्त्तते प्रवर्त्तते काव्यबन्धे ध्यानेन त्रुटयति चिरं तरुणी तरट्टी । यह कर्पूरमंजरी को देख कर राजा चण्डपाल की उक्ति है । यह प्रगल्भा तरुणी चित्त में विघटित होती है गुणों के विषय में त्रुटित नहीं है । शय्या में लोट रही है । दिशाओं में विसर्पण करती है । सोती नहीं है इधर उधर भ्रमण करती है । वचन में वर्त्तन करती है अविरत बोलती है । काव्यरचना में प्रवृत्त होती है । चिरकाल में ध्यान से हटती है । यहाँ टवर्गानुप्रास है यह केवल शब्द को ही अलंकृत करता है विप्रलम्भश्रृंगार को नहीं । क्योंकि टवर्ग उसके प्रतिकूल है ।

मित्रे । मित्र सूर्य एवं सुहृत् के कहीं अज्ञात प्रदेश में चले जाने पर यह कमल समूह मौन हो रहा हैं । और म्लान हो गया है । भ्रमर पक्षी एवं भ्रान्त पथिक क्रन्दन कर रहे हैं । इधर सामने अपनी कान्ता से सम्पृक्त सारस पक्षी एवं रसिक को देखकर वियोगी चक्रवाक ने न तो विसलता का आस्वादन ही किया और न उसको छोड़ा ही किन्तु निकलते हुए जीव को रोकने के लिए केवल कण्ठ में अर्गला की तरह रख लिया । यहाँ उपमालंकार है वह केवल वाच्य अर्थ को ही अलंकृत करता है । विप्रलम्भश्रृङ्गार को नहीं । क्योंकि विसलता जीव को रोकने में समर्थ नहीं है अतः प्रकृत के अनुकूल यह नहीं है ।

एष एव च गुणालङ्कारप्रविभागः। एवं च "समवायवृत्त्या शौर्य्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत्।

यदप्युक्तम् "काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति तदपि न युक्तम्। यतः किं समस्तैर्गुणैः काव्यव्यवहार, उत कतिपयैः। यदि समस्तैः तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा।

अथ कतिपयैः, ततः—

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्तुल्लसत्येष धूमः ॥३४५॥

इत्यादावोजः प्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥३४६॥
बालक्रीड़ा

यही हमारे कहे हुए लक्षणों के अनुसार गुण एवं अलंकार का उत्तम विभाग है। भामहालंकार की विवृति में भट्टोद्भट के कथन का निरूपण करके अपने मत से उसको दूषित करते हैं एवं च। इसलिए नैयायिकों के "गुण एवं गुणी में समवाय सम्बन्ध होता है" इस सिद्धान्त के अनुसार शौर्यादि गुण आत्मा गुणी में समवाय सम्बन्ध से रहते हैं और 'संयोग द्रव्यों का ही होता है' इस नियम के अनुसार अलंकार रूप द्रव्य शरीर के अवयवों में संयोग सम्बन्ध से रहते हैं ऐसा गुण एवं अलकारों का भेद है तो होवे किन्तु काव्य में ओजः प्रभृति गुणों एवं अनुप्रासोपमादि अलंकारों दोनों की ही समवायसम्बन्ध से स्थिति है इस पर भी जो लोग इनका भेद करते हैं वह भेद गड्डलिका प्रवाह की ही तरह है। जैसे एक भेड़ जिस तरफ चलती है उसी तरफ सभी भेड़ें नीचा मुँह किये हुए चल देती है इधर उधर नहीं ताकती हैं उसी तरह किसी प्राचीन आलंकारिक ने कुछ समझ कर या प्रौढि से इनको भिन्न रूप से कह दिया बस आधुनिको ने भी उसी तरह कहना आरम्भ कर दिया। कुछ भी विचार नहीं किया।

अब वामन के द्वारा किये हुए विभाग को दूषित करने के लिए उनकी उक्ति का उपन्यास करते हैं यदप्युक्तम्। और भी जो किसी ने कहा कि काव्य की शोभा करने वाले धर्म गुण होते हैं और काव्य की शोभा बढ़ाने वाले धर्म अलङ्कार होते हैं। वह ठीक नहीं है। क्योंकि यह प्रश्न होता है कि क्या समस्त गुणों से काव्य व्यवहार होता है या कतिपयगुणों से। यदि कहें कि समस्त गुणों से होता है तब तो समस्त गुणों वाली गौड़ी या पाञ्चाली रीति ही काव्य की आत्मा होगी। अगर कहें कि कतिपय गुणों से वह व्यवहार होता है तब तो यहाँ इस बड़े ऊँचे पहाड़ पर अग्नि जल रही है क्योंकि यह बड़ा भारी धूआँ ऊपर को उठ रहा है। इत्यादि में भी ओजः प्रभृति गुणों के रहने पर काव्य व्यवहार की प्राप्ति हो जायगी। किन्तु सिद्धान्त में यह होता नहीं। और

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ ।

इदानीं गुणानां भेदमाह—

(८९) माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।

एषां क्रमेण लक्षणमाह—

(९०) आह्लादकत्वं माधुर्य्यं शृंगारे द्रुतिकारणम् ।।६८।।

शृङ्गारे अर्थात् सम्भोगे द्रुतिर्गलितत्वमिति। श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

(९१) करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।

अत्यन्तद्रुतिहेतुत्वात् ।

(९२) दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ।।६९।।

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

(९३) बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।

वीराद् बीभत्से, ततो रौद्रे सातिशयमोजः ।

(९४) शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ।। ७० ।।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

बालक्रीड़ा

यह वरवर्णिनी तो इसी देह से प्राप्त होनेवाला स्वर्ग है। इसके अधर का मधुररस सुधा को तिरस्कृत करता है। इत्यादि में गुणों की अपेक्षा नहीं रखने वाले विशेषोक्ति एवं व्यतिरेक अलंकार काव्यव्यवहार के प्रवर्त्तक हैं। इस तरह गुण एवं अलकारों के भेद को सिद्ध करके अब गुणों के भेद प्रकारों को कहते हैं!

माधुर्य। माधुर्य ओज एवं प्रसाद नाम वाले ये तीन ही गुण हैं। वामनाचार्य ने जो इनके दश भेद किये हैं वे नहीं हैं। अब क्रम से इनके लक्षणों को कहते हैं आह्लादकत्वम्। चित्त की द्रुति का कारण आल्हाद माधुर्य गुण है। यह गुण शृंगार में रहता है। शृंगार का मतलव है सम्भोग। द्रुति का अर्थ है चित्त का जैसे पिघल जाना। द्रुति का अर्थ श्रव्यत्व नहीं है क्योंकि श्रव्यत्व तो ओज एवं प्रसाद गुणों में भी रहता है। यह माधुर्य करुण विप्रलम्भ एवं शान्त में उत्तरोत्तर अतिशय से रहता है। अत्यन्त द्रुति ही इस अतिशय का हेतु है।

चित्त की विस्तृति की हेतु दीप्ति ही ओज गुण है वीर रस में इसकी स्थिति है। चित्त की विस्ताररूप दीप्ति का जनक ओज है। बीभत्स एवं रौद्र रसों में क्रम से इनका आधिक्य है। वीर की अपेक्षा बीभत्स में बीभत्स की अपेक्षा रौद्र में उत्तरोत्तर अतिशय से यह ओज रहता है।

शुष्क इन्धन में अग्नि की तरह और स्वच्छ आधार भूत पदार्थ में जल की तरह जो झट पट चित्त में फैल जाता है वह गुण प्रसाद है। इसकी स्थिति सभी रसों

अन्यदिति। व्याप्यमिह चित्तम्। सर्वत्रेति सर्वेषु रसेषु सर्वासु रचनासु च।

(९५) गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥

गुणवृत्त्या उपचारेण। तेषां गुणानाम्। आकारे शौर्यस्येव।

कुतस्त्रय एव न दश इत्याह—

(९६) केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७१ ॥

## मधुसूदनी

"त्रयस्ते" इति भामहमनुसरति। न ततो दश इति दण्डिवामनौ परिहरति। भगवन्! वाग्देवतावतार! समस्तै गुणैः काव्यव्यवहार उत कतिपयैरित्येवं भवता वामनाचार्यो मुधैवाक्षिप्ताः। यतः सगुणौ शब्दार्थौ काव्यमिति काव्य लक्षणं निर्मिमाणेन स्वयं किमुदटङ्कि। सगुणौ इत्यस्य। गुणरहितौ इति वा गुणाभिव्यञ्जकौ इति वा कोऽप्यर्थोऽस्तु। तत्र प्रष्टव्यम्। किं समस्तैः गुणैः सहितौ शब्दार्थौ काव्यमथवा कतिपयैर्गुणैः सहितौ वा तौ तथा। अथवा किं समस्तानां गुणानामभिव्यञ्जकौ तौ तथा। अथवा कतिपयानां गुणानामभिव्यञ्जकौ तौ तथा। इति। यदि समस्तैः समस्तानां वा तर्हि अनङ्गरंगेत्यत्र केवलमाधुर्यस्य, मूर्ध्नामुद्वृत्तेत्यत्र केवलौजसः सद्भावे कथं काव्यव्यवहारः। यदि कतिपयैः कतिपयानां वा तर्हि "स्वर्गप्राप्ति" रित्यत्र विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ इति भवदुल्लेखानुसारमेकस्यापि गुणस्याभावे कथमत्र तथा व्यवहारः स्यात्। अतश्च

## बालक्रीड़ा

में होती है। अन्यत् का अर्थ है व्याप्ति का आश्रय चित्त। सर्वत्र का मतलब है सभी रस एवं सभी रचनायें।

प्रश्न—आप के अब तक के कथन से यही भान होता है ये माधुर्यादि गुण श्रृंगारादि रसों में ही रहते हैं किन्तु प्रसाद के विषय में जो आपने कहा कि सभी रचना में यह प्रसाद रहता है वह तो कथन पूर्वापर विरुद्ध हुआ। क्योंकि रचना तो रस की श्रेणी में नहीं है वह तो शब्दरूप ही है इस शङ्का का निवारण करने के लिए उत्तर देते हैं। गुण। गुणवृत्ति से ही इन गुणों की वृत्ति शब्द और अर्थ में मानी है। अर्थात् आत्मा में रहने वाले गुण शौर्य आदि की शरीर में स्थिति जैसे लक्षणा से ही मानी जाती है उसी तरह रस में रहने वाले इन माधुर्यादि गुणों की भी वर्ण पद रचना एवं अर्थ में वृत्ति लक्षणा से मानी जाती है। गुणवृत्ति का अर्थ है उपचार। तेषां माने गुणों की स्थिति। आकार में शौर्यादि की तरह।

ये गुण तीन ही क्यों हैं दश क्यों नहीं है इसके उत्तर में कहते हैं केचित्।

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः। तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद्दोषः। तथा हि 'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्यम्। औज्ज्वल्यरूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।

## मधुसूदनी

यश्चोभयोः समो दोषः परीहारस्तयोः समः
नैकः पर्यनुयोज्यः स्यात्तादृगर्थविचारणे।

भगवन्! स्वभावः इतरेषां जनानां न तु भवादृशां, जनः सर्षपमात्राणि परच्छिद्राणि पश्यति। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति। तर्हि कथमिदम् आल्हादकत्वमिति। अत्र आल्हाद एव आल्हादकः स्वार्थे कः इति समे व्याख्यातारः। ततश्च आल्हादकत्वमाल्हादनिष्ठो धर्मः। आल्हादश्च रसश्चेत्यनर्थान्तरम्। एवञ्च ये रसस्यांगिनो धर्मा गुणा इति भवदुक्तेरनुसारं आल्हादनिष्ठो धर्मो गुण इति गुणसामान्यलक्षणप्राप्तस्यास्य सर्वत्र समन्वयेन चित्तद्रुतिकारणमाह्लादकत्वं माधुर्यं तच्च शृङ्गारादिषु रसेषु। दीप्तिस्वरूपाया चित्तविस्तृतेर्हेतुराह्लादकत्वमोजः तच्च वीरादिषु तेषु। चित्तव्याप्तिकारणमाह्लादकत्वं प्रसादः स च सर्वेषु तेषु इति विशेषलक्षणम्।

## बालक्रीड़ा

वामनाचार्य के द्वारा कहे गये गुणों में से कुछ गुणों का ता इन्ही तीनों गुणों में अन्तर्भाव हो जाता है। कुछ ऐसे है जो दोषों के त्याग के आश्रित है। यानी दोषाभाव रूप हैं। और कुछ ऐसे हैं जो कहीं पर स्थल विशेष में दोष रूप है। अतः दश नहीं है।

बहुत पदों को भी एक पद की तरह भासित करा देने वाला जो श्लेष है। आरोह एवं अवरोह का क्रम अर्थात् विषय के अनुसार रचना में आरोह गाढ़ता कर देना अथवा अवरोह शिथिल कर देना रूप जो समाधि है। विकटत्व यानी बीच २ में कुछ तोड़ देने से पदों का नाँचते हुए जैसा मालूम पड़ना रूप उदारता है ओज से मिश्रित शिथिलता रूप प्रसाद है इन श्लेष समाधि उदारता एवं प्रसाद का ओज में अन्तर्भाव है। पृथक् पदत्व रूप माधुर्य का एक शैली से साक्षात् ही उपादान कर दिया। प्रसाद के द्वारा अर्थव्यक्ति का ग्रहण हो गया। मार्गाभेदरूपा समता अर्थात् आरम्भ से लेकर अन्त तक रचना में मार्ग को नहीं बदलना एक ही रचना कहीं पर दोष है जैसे "मातङ्गाः" इसमें सिंह के कहने के अवसर पर मसृण मार्ग का त्याग देना गुण ही है। कष्टत्व एवं ग्राम्यत्व को दोष कहा है अतः उसके निराकरण में अपारुष्यरूप सौकुमार्य और उज्वलता रूप कान्ति को स्वीकार कर लिया। इस प्रकार दश शब्द

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥

इति या प्रौढिः ओज इत्युक्तं तद्वैचित्र्यमात्रं न गुणः। तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलत्वरूपाश्लीलत्वग्राम्यत्वानां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यं, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यम्—इत्यर्थदृष्टिरूपः समाधिरपि न गुणः।

## मधुसूदनी

अमङ्गलत्वरूपाश्लीलत्व ग्राम्यत्वानामिति त्वघटितः पाठः। त्वाऽघठित स्त्वपपाठः इति।

## बालक्रीड़ा

के गुण नहीं है। एक पदार्थ को कहने के लिए बहुत पदों की यानी वाक्य की रचना करना और बहुत पदार्थों यानी वाक्यार्थ के लिए एक पद को कहना। एक वाक्यार्थ का अनेक वाक्यों से प्रतिपादन रूप व्यास। अनेक वाक्यार्थ का एक वाक्य से प्रत्यायन रूप समास। एवं विशेषणों का साभिप्रायत्व यानी प्रकृत के उपयोगी बनाना प्रौढि होती है। इस तरह की पांच प्रकार की प्रौढ़ि को जो ओज कहा है। वह केवल वैचित्र्य ही है गुण नहीं है। उनके विना भी यह काव्य है ऐसा व्यवहार हो सकता है। अपुष्टार्थत्व, अधिकपदत्व अनवीकृतत्व अमङ्गलत्वरूप अश्लीलत्व एवं ग्राम्यत्व के निराकरण से साभिप्रायत्व रूप ओज, अर्थ वैमल्यात्मा प्रसाद, उक्तिवैचित्र्य रूप माधुर्य अग्राम्यत्व रूप उदारता को स्वीकार कर लिया। आगे अलंकार प्रकरण में जिसका निरूपण करेंगे उस स्वभावोक्ति अलंकार तथा ध्वनि एवं गुणीभूतव्यंग्य के द्वारा वस्तु के स्वभाव को स्फुट करने रूप अर्थ व्यक्ति और दीप्तरसत्वरूप कान्ति को स्वीकृत कर लिया गया है। क्रम क्रिया परम्परा। कौटिल्य चतुराई। अनुल्वणत्व जाहिर नहीं होने देना। उपपत्ति युक्ति इनका सम्मेलन जिसमें रहे ऐसा घटनास्वरूप श्लेष भी केवल विचित्रता ही है गुण नहीं है। विषमता का अभावरूप समता केवल दोषाभाव ही है गुण नहीं है। कौन भला जो उन्मत्त नहीं है सावधान है वह अन्य के प्रस्ताव में अन्य का अभिधान करेगा। काव्य में जिस अर्थ का वर्णन करते हैं उस अर्थ का कोई भी योनि कारण नहीं है अथवा किसी दूसरे की छाया ही योनि कारण है अर्थात् किसी की छाया को लेकर काव्य का निर्माण किया है ऐसा जब तक ज्ञान नहीं होगा तब तक वह कैसे काव्य कहलायेगा अतः अर्थदृष्टिरूप समाधि भी गुण नहीं है।

(९७) **तेन नार्थगुणा वाच्याः ॥**

वाच्याः वक्तव्याः ।

(९८) **प्रोक्ताः शब्दगुणाश्च ये ॥**

**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥७३॥**

के कस्य इत्याह—

(९९) **मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**

**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥७४॥**

## मधुसूदनी

'तेन नार्थगुणा वाच्याः, इति । तेन अन्तर्भवनदोषाभवनदोषत्वभजनरूपेण हेतुना दश अर्थगुणा न वाच्या इत्येव कथमुल्लिख्यते दश शब्दगुणा न वाच्या इत्यपि लेखनीयम्' । यतः प्रोक्तेनैव हेतुना बहूनामित्युपक्रम्य एवं न दश शब्दगुणा इति भवतोपसंहृतम् । ततश्च पूर्वमेवं लेखनीयम् "न तच्छब्दगुणा वाच्या" तदनु—तेन नार्थगुणा दश । इति । येन हेतुना दश शब्दगुणा न वाच्या तेन हेतुना दश अर्थगुणा अपि न वाच्याः ।

अन्यच्च "प्रोक्ताः शब्दगुणाश्च ये" इति किम्वुक्तम् । कुत्र पूर्वं शब्दगुणा प्रोक्ताः । ननु भोः "गुणवृत्या पुनस्तेषाम्" इत्वेवं शब्दगुणानां संकेतः कृतः । आ एवं निगद्यते । भगवन् ! गुणवृत्येति पूर्णं वाक्यं वदनीयम् । गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता इति । अत्र तु सिद्धान्त्यते । यत् शब्दार्थये गुणा न वर्त्तन्ते । यदि ब्रूषे शब्दार्थयोर्गुणा वर्त्तन्ते इति तर्हि वक्तव्यं गुणवृत्त्या तयोर्वृत्तिर्मता न तु साक्षात्तयोर्वृत्तिर्मता । इत्येवमुभयत्र तयोः संकेतः कृतः इति ।

अन्यच्च वर्णाः समासो रचना तेषां व्यञ्जकतामिताः । इत्यस्य कोऽर्थः । प्रोक्ताः शब्दगुणाश्च ये इति पूर्ववाक्योपात्तस्य शब्दगुणा इत्यस्यानुरोधीत् । तेषां शब्दगुणानां व्यञ्जकतां वर्णाः समासो रचना च इताः इतः इता इति । अस्तु । परं भगवन् ! अर्थगुणानां व्यञ्जकतां के इताः । ये तामितास्ते कथं नोक्ताः । तेऽपि तु वदनीयाः । किं ते अर्थगता गुणा, गुणा न सन्ति । प्रतिज्ञा तु उभयोर्निर्देशार्थं कृतैव । गुणांल्लक्षयित्वा यथैषां व्यञ्जकत्वं तथोदाहरिष्यते इत्युल्लेखात् । एवं च विशिष्य पृथक् निर्देशोऽवश्यं वशनीयः । तस्मादेवमत्र पाठः साधीयान्—

वर्णाः समासो रचना गुणानां व्यञ्जकास्तयोः । इति ।

## बालक्रीड़ा

इस लिए अर्थ के गुणों को नहीं कहना चाहिए । और जो पहले शब्दों के गुण कहे हैं उनके व्यंजक वर्ण समास एवं रचना हैं । अब यह बतलाते हैं कि कौन किसके व्यंजक है । मूर्ध्नि । कवर्ग चवर्ग तवर्ग एवं पवर्ग के अन्तिम ङ् ञ् न् और म् वर्ण का

ट–ठ–ड–ढ वर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः तथा रेफलकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः समासो वेति समासः तथा माधुर्यवती पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका। उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥३४७॥

## (१००) योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।

### मधुसूदनी

माधुर्यस्य व्यञ्जिका इत्यत्र व्यञ्जिकेति पदे स्त्रीत्वमेकवचनञ्च विरुद्धम् यतस्तथा सति रचनायामेव तस्यान्वयः स्यान्नान्यत्र। अपेक्षितस्तु स वर्णेषु समासेऽपि च। अतः वर्णा व्यञ्जकाः, समासो व्यञ्जकः, रचना च व्यञ्जिका इत्यत्रत्यानामेषां पदानां समासेन एकशेषे प्राप्ते "पुमान् स्त्रिया" इति सूत्रेण स्त्रिया सहोक्तौ पुंसः शेषत्वम्। पूर्वोपात्तस्य वर्णाः इति पदस्यानुरोधेन "व्यञ्जकाः" इत्येव सुपाठः। पश्चात् जातान्वयतया कृतार्थस्य तत्पदस्य इतरत्रान्वयार्थं लिंगं वचनं च विपरिणम्येताम्। अथवा मूलकारिकायां "माधुर्ये घटना तथा" इति तथापदमुपात्तम्। तस्यार्थः "वर्णाः समासो रचना तेषां व्यञ्जकतामिताः" इत्यनुरोधात् "व्यञ्जकतामिताः" इति। एवं हि स्वोक्तस्य तथा पदस्यापि सुसंगतिः स्यात्तेन तत्र इताः। इतः। इता। इत्यन्वयः स्यात्।

### बालक्रीड़ा

किसी स्ववर्गीय वर्ण के मस्तक में विन्यास से युक्त; टवर्ग रहित क से लेकर मपर्यन्त स्पर्श संज्ञावाले एवं लघु रेफ एवं णकार वर्ण तथा समास से रहित या मध्य समास वाली रचना ये माधुर्य गुण के व्यञ्जक है। ट ठ ड एवं ढ से रहित कादि मान्त वर्ण जिनके शिर पर अपने वर्ग के अन्तिम वर्ण विन्यस्त हों ऐसे तथा ह्रस्व अच् से अन्तरित रेफ और णकार वर्ण समास का अभाव या मध्यम समास तथा मधुर पदों के योग से बनी हुई माधुर्य गुणवती रचना ये सब माधुर्य गुण के व्यञ्जक हैं।

उदाहरण जैसे अनङ्ग। स्तन के भार से कुछ झुके हुये अंगो वाली नायिका के अनंग की रंग भूमि नृत्य स्थली के सदृश इन अंगों ने ऐसी विलक्षण शैलियों को अंगीकार कर लिया है जिससे ये नायिकायें युवकों के स्वान्तों को शान्त से इतर विषयों के चिन्तन करने में तत्पर कर देती हैं। यहाँ अपने अपने वर्ग के अन्तिम अक्षर जिनके मूर्धा में है ऐसे स्पर्श वर्ण तकार तथा ह्रस्व अच् से अन्तरित रेफ और णकार वर्ण। अनङ्गरंगप्रतिम शान्तापरचिन्तनानि ये मध्यम समास। तथा प्रतिमं तदंगं भंगीभिः और अंगीकृत वाली माधुर्यवती रचना ये माधुर्य गुण के व्यञ्जक हैं।

अब ओजो व्यञ्जक वर्णों का निरूपण करते हैं। योगः। वर्गों के आद्य प्रथम वर्ण च ट और प तथा तृतीय ग ज ड द और ब के साथ अन्त्य यानी प्रथम के

**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥७५॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोः द्वितीय-चतुर्थयोः, रेफेण अध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोस्तेन तस्यैव सम्बन्धः, टवर्गोऽर्थात् णकारवर्जः, शकारषकारौ, दीर्घसमासः, विकटा सङ्घटना ओजसः। उदाहरणम्—

मूर्ध्नामुद्‌वृत्तेत्यादि ॥३४८॥

**(१०१) श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्।**
**साधारणः समग्राणां स प्रसादो गुणो मतः ॥७६॥**

समग्राणां रसानां सङ्घटनानां च। उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-

### मधुसूदनी

(श्रुतिमात्रेण शब्दस्य यत्रार्थप्रत्ययो भवेत्)

श्रुतिमात्रेणेति। अत्र स प्रसादः इत्यत्रत्येन प्रसादार्थकेन स इति पदेन पूर्वोपात्तो यत्पदार्थो विमृश्यते। पूर्वञ्च येनेत्येवं दिशा यत्पदार्थ उपात्तः। ततश्च येन प्रसादेन अर्थप्रत्ययो भवेदित्यन्वयो जागर्त्ति। तत्तु कथं यतः शब्देन अर्थप्रत्ययो भवति न तु प्रसादेन गुणेन। प्रसादे गुणे सति तु संगतिः स्यात्। अतोऽत्र यत्रेति पाठः साधीयान्। श्रुतिमात्रेण अर्थात् केवलश्रुत्या। शब्दात्तदिति। अत्र शब्दस्तु अर्थप्रत्यायनक्रियायां कर्त्ता। अतः कर्तृकर्मणोः कृतीति सूत्रेण श्रुतीति कृद्योगे कर्त्तरि षष्ठ्या भाव्यं तेन श्रुतिमात्रेण शब्दस्य इति पाठेन[?]।

### बालक्रीड़ा

अन्त्य ख-छ ठ थ और फ तथा तृतीय के अन्त्य घ झ ढ ध-और भ का योग सम्बन्ध जैसे पुच्छ एवं बद्ध इत्यादि। तथा रे फ के साथ ऊपर (बर्ही) नीचे (चक्र) एवं ऊपर और नीचे दोनों (निर्ह्राद) जगहों में जिस किसी का योग तथा तुल्य समान वर्णों का योग जैसे चित्त चक्क इत्यादि। तथा टादि अर्थात् ट ठ ड और ढ ये चारों तथा श और ष ये वर्ण दीर्घ समास एवं उद्धत गुम्फ रचना ये सब ओज गुण के व्यञ्जक हैं। उदाहरण जैसे मुर्ध्नामुद्धत्त कृत्त इत्यादि। इसकी व्याख्या पहिले सप्तम उल्लास में कर दी गई है।

प्रसाद के व्यञ्जकों को कहते हैं—श्रुति। जहाँ शब्द के सुनते ही अर्थ का ज्ञान हो जाय वह कोमल या विकट वर्ण समास एवं रचना प्रसाद के व्यञ्जक हैं। यह गुण समग्र रसों में साधारण है। यहाँ समाग्रणां की वृत्ति में संघटनानां च लिखना ठीक नहीं है। क्योंकि माधुर्य एवं ओज गुणों के व्यञ्जकों में जैसे रचना अन्तर्भूत है वैसे ही यहाँ भी रचना प्रसाद के व्यञ्जकों में अन्तर्भूत है। क्योंकि रचना गुणों की व्यञ्जिका और गुण रसों के व्यञ्जक हैं। यह क्रम है अतः रस के समान कोटि में उसका उपन्यास करना गड़बड़ है। उदाहरण जैसे—परिम्लान। यह वह विषिनी कमलिनी के पत्रों

स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्गयाः सन्तापं वदति बिसिनीपत्रशयनम् ॥३४९॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि,

(१०२) वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥७७॥

क्वचिद्वाच्यप्रबन्धानपेक्ष्या वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥३५०॥

बालक्रीड़ा

...चा गया शयन है जो कृशाङ्गी के सन्ताप को बतला रहा है क्योंकि यह शयन पीन स्तनों एवं पीन जघन के सम्बन्ध से दोनों तरफ शुष्क हो गया है। और कृश कटि के अन्तः मध्य भाग से सम्बन्ध नहीं होने से जो हरित है तथा शिथिल भुजलता के आक्षेप पटकने एवं वलन सिकोड़ने से जिसका विन्यास अस्त व्यस्त हो गया है। यहाँ वर्ण समास एवं रचना के द्वारा शीघ्र ही अर्थ प्रतीत होता है अतः प्रसाद गुण है।

प्रश्न—जिस तरह गुणों के व्यञ्जक रचना वगैरह का निदर्शन किया गया है उस तरह शास्त्र स्थिति सम्पादन के अनुसार कवियों के काव्य नहीं दिखाई देते हैं उनमें तो परिवर्त्तन भी कहीं कहीं देखा जाता है। उत्तर। हाँ ठीक है यद्यपि संघटना वगैरह गुणों के परतन्त्र हैं अर्थात् जैसा उल्लेख हम कर आये हैं वही व्यवस्था उचित है किन्तु उत्सर्ग एवं अपवाद तो सभी जगहों में रहता ही है तदनुसार यहाँ भी है। वक्तृ। जैसे वक्ता वाच्य एवं प्रबन्ध के औचित्य के अनुसार कहीं कहीं रचना समास एवं वर्णों में अन्यथा भाव भी इष्ट है।

कहीं वाच्य एवं प्रबन्ध की परवाह नहीं कर के वक्ता के औचित्य के अनुसार रचना वगैरह जैसे—मन्थ। किसने इस दुन्दुभि को बजाया। जो दुन्दुभि, मन्थन से विकल समुद्र के जल से व्याप्त हुई गुहा वाले चञ्चल मन्दराचल की ध्वनि की तरह धीर ध्वनि वाला है। वादनदण्ड से आघात होने पर जो गर्जने वाले प्रलयकालीन मेघों की घटाओं के परस्पर के संघर्ष से भी चण्ड है। द्रौपदी के क्रोध का अग्रदूत यानी भविष्य की सूचना देने वाला है तथा दुर्योधन वगैरह के निधन का सूचक उत्पातभूत निर्घातवात है। यानी मेघ एवं वायु के संघर्ष से उत्पन्न हुआ यह ध्वनि जो हमारे सिंहनाद की प्रतिध्वनि के तुल्य है। यहाँ वाच्यार्थ क्रोध का व्यञ्जक नहीं है और प्रबन्ध काव्य भी अभिनेय अर्थ से घटित है तब भी उसके प्रतिकूल उद्धत रचना वगैरह हैं। क्योंकि यहाँ वक्ता भीम है। वक्ता अपने स्वभाव के अनुसार ही कोमल या उद्धत बोल बोलता है।

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्; अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः। वक्ता चात्र भीमसेनः॥

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः। यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां।
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम्॥३५३॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते। तथा हि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः। एवमन्यदप्यौचित्यमनुसर्तव्यम्।

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टमोल्लासः॥ ८॥

## बालक्रीड़ा

कहीं पर वक्ता एवं प्रबन्ध की परवाह नहीं कर के वाच्यार्थ के औचित्य के अनुसार रचना वगैरह जैसे—प्रौढ। धड़ से शिर के कट जाने के कारण अलग हो जाने से ग्रीवा के छिद्र से होकर गुजरने वाली भां भां ध्वनियों से मानों भगवान् राम के वीर्य की स्तुति करता हुआ यह कटा हुआ कुम्भकर्ण का भयंकर उत्तमाङ्ग शिर आकाश से गिर रहा है। जिस प्रौढ भाव से शिर को काटा गया है उसी तरह के प्रौढ-च्छेद के अनुरूप उत्पन्न होने वाले वेग से उछल रहे राहु के ग्रास के भय से घोड़ों की वागडोर को खैंचकर रवि के रथ को तिरछा घुमा देने वाले सारथि अरुण के द्वारा जो देखा गया है।

यहाँ यद्यपि वक्ता वैतालिक है। और प्रबन्ध भी अभिनेय है। तद्यपि वाच्य कुम्भकर्ण का उत्तमाङ्ग भयंकर है अतः उसके ओजस्वी होने के कारण औद्धत्य की व्यञ्जक रचना की गयी हैं।

कहीं वक्ता एवं वाच्य की परवाह नहीं करके प्रबन्ध के योग्य ही रचना वगैरह जैसे—आख्यायिका में भले ही शृंगार रस क्यों न हो किन्तु कोमल वर्णों का उपन्यास नहीं किया जा सकता है। कथा किस्सा कहानी में भले ही रौद्र रस का प्रसंग आजाय किन्तु अत्यन्त उद्धत रचना वगैरह नहीं होते हैं। और नाटकादि में रौद्र रस के रहने पर भी अभिनय के समय में दीर्घ समास वगैरह नहीं वोले जा सकते हैं। इसी तरह के अन्य औचित्यों का भी अनुसरण अपने समझ के अनुसार कर लेना चाहिए।

इति काव्यप्रकाश में गुण एवं अलंकारों के भेद के अनुसार नियत गुण निर्णय नामक अष्टम उल्लास की बालक्रीड़ा समाप्त हुई।

## अथ नवमोल्लासः

गुण(नां)विवेचने कृतेऽलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

(७८) यदुक्तमन्यथावाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥

श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।

### मधुसूदनी

गुणानां विवेचने इति पृथक् द्वे पदे यदि स्यातां तदा विवेचने इति पद-
कारा इत्यत्राप्यन्वेष्यति । गुणानां विवेचने कृते सति सम्प्रति विवेचने विषये
कारा अपि प्राप्तावसराः अर्थात् अलंकाराणामपि विवेचनस्य अवसरः प्राप्तः ।
कराणां संगतिर्भवति । अन्यथा तस्मिन्नेकपदे स्वीकृते तु समस्तस्य जातान्व-
यतया कृतार्थस्य तस्य कथमन्यत्रान्वयः स्यात् । इति बोध्यम् । मानसोऽन्वयः
स्वीक्रियते तर्हि यत्र तत्र सर्वत्र एवमेव एकपदमेवास्तु ।

### बालक्रीड़ा

यहाँ "गुणविवेचने" इसमें उपात्त विवेचन पद का अलंकाराः प्राप्तावसराः इसके साथ मानस अन्वय है । अतः गुणों के विवेचन करने के वाद अब अलंकारों के विवेचन का अवसर आया है उनमें पहले शब्दालंकारों को करते हैं । यदुक्तम् । किसी वक्ता ने अपने अन्य अभिप्राय से किसी वाक्य को कहा किन्तु श्रोता उसी वाक्य की अन्य अभिप्राय से योजना जहाँ करता है वह वक्तोक्ति अलंकार है । तथा का अर्थ श्लेषवक्तोक्ति एवं काकुवक्रोक्ति है । श्लेष समंग एवं अमंग दो प्रकार का होता है ।

उसमें समंग श्लेष वक्रोक्ति का उदाहरण जैसे नारीणाम् । नारियों के अनुकूल आचरण करते हो तब अभिज्ञ हो समझदार हो । वक्ता ने नारीणां पद को कामिनीरूप अर्थ के बोधन करने की इच्छा से कहा था श्रोता ने उसको तोड़कर न अरीणां करके "शत्रुओं का नहीं" अर्थ किया और कहा कि भला कौन चेतन पुरुष है जो वामों का प्रिय करेगा । अर्थात् कोई भी शत्रुओं का हित नही करता है । इसी वामानां पद की प्रथम वक्ता अपने मन के अनुसार अबला अर्थ में योजना करके कहता है कि आप स्त्रियों के हित कृत् नहीं हैं । फिर श्रोता अबला पद का दुर्बल अर्थ और हितकृत् पद का हित काटने वाला अर्थ मानकर कहता है कि बल के अभाव से जिस (स्त्री) का स्वरूप प्रसिद्ध है उसके हित को काटना क्या युक्त है । फिर प्रथम वक्ता बलाभावप्रसिद्ध पद के बल नामक असुर के नाश कर देने से प्रसिद्ध अर्थ को मानकर कहता है कि

| लिपिः १ | ध्वनिः २ | वर्णः ३ | पदम् ४ | वाक्यम् ५ |
|---|---|---|---|---|
| चित्रम् स्थान-बन्धाकारादि मेदाद् बहुविधम् । | काकुवक्रोक्तिः चिन्ता शोक हर्ष प्रसाद भय क्रोधादिमेदभिन्ना काकवः । ध्वनिविकारः काकुः । श्लेष वक्रोक्तिश्च । अलंकारसर्वस्वकार इमांवक्रोक्तिमर्थालंकारं मनुते । | अनुप्रासः वर्णसाम्यं वर्णस्य पुनः श्रुतिः । छेकवृत्तिगतत्वाद् द्विधा । साम्यापन्हवाख्यः वर्णश्लेषश्च । | लाटानुप्रासः सार्थकस्य पदस्य साम्यम् । तत्र पदेऽनुस्यूता पुनः श्रुतिः पदार्थेऽनुस्यूतापुनरुक्तिः । यमकम् । सार्थकनिरर्थकपदयुगलगतं तादृशपदघटितपादयुगलगतं वाक्ययुगलगतं साम्यं, तत्र पुनः श्रुतिः पुनरुक्तिश्च प्राग्वत्सार्थकस्यैव । निरर्थकस्यतु पुनः श्रुतिरेव न पुनरुक्तिः । अत्रापि साम्यापन्हवाख्यः श्लेषः । सच पदपदैकदेशवर्णप्रकृति लिङ्गविभक्ति प्रत्ययभाषावचनभेदादष्टविधः । स्वादयस्तिबादयो विभक्तिसंज्ञकाः । टाप्ङीप्ङीषादयो लिंगवोधका अपि प्रत्यया तथापि पृथग् गणिताः । अधिकमत्रत्यं बालक्रीडायां द्रष्टव्यम् । | लाटानुप्रासः सार्थकस्य वाक्यस्य साम्यम् सार्थकस्य वाक्यस्य पुनः श्रुतिः पुनरुक्तिश्च । यमकम् सार्थक निरर्थक पद तत्समूहभूत पादवाक्यानां युगलयोः स्थितं साम्यम् । सार्थक निरर्थकोभयपदयुगलगता पुनःश्रुतिरेव । सार्थकस्य तादृशस्य पुनः श्रुति पुनरुक्तिश्च । निरर्थकस्य तादृशस्य पुनः श्रुतिरेव । साम्यापह्नवाख्यः श्लेषः । सच सार्थक पदसमूहवाक्यपम्पन्नसंस्कृतप्राकृतादिभाषागतः । पुनरुक्तवदाभासश्च । |

अलंकाराणां विषये विशिष्य विश्लिष्य च जिज्ञासवो मदीयां रसगंगाधरभू[illegible]

[illegible] तत्रालंकारपूल्मतिशयः शब्दे अर्थे च ।

युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥३५२॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३५३ त

काक्वा यथा—

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।

## मधुसूदनी

कोऽलंकारोऽनया विनेति भामहोक्तेः। तत्र लिपिरपि शब्दस्मारकत्वाच्छब्दः। तेन शब्दो द्विधा लिपिरूप उच्चारणीयश्च। लिप्यां सोऽतिशयः स्थानबन्धाकारादिभेदादनेकविधोऽपि शब्दस्वरूपस्य एकरूपत्वादेकविध एव। उच्चारणीयो ध्वनिवर्णपदवाक्यभेदाच्चतुर्विधः। एष्वपि कश्चनातिशयोऽवश्यं वश्यैर्वंशनीयः। तत्र ध्वनौ सोऽतिशयः स ध्वनेर्विकार एव येन वक्ता अभिनेता वा भयाकुलः चिन्ताग्रस्तः क्रोधान्धः अथवा प्रसन्नो भाति। तस्य नाम काकुरत एवास्य काकुवक्रोक्तिरित्यलंकारः। ध्वनेरनन्तरं वर्णः स च स्वरव्यंजनभेदाद् द्विविधोऽपि काव्यमार्गे स्वरो न गण्यत इति केवले स्वरेऽतिशयस्यादर्शनाच्च व्यञ्जनमेवानुगृह्यते। तत्र च क क इति च च इति त त इत्येतादृशं पुनःश्रुतिमयं साम्य-

## बालक्रीड़ा

बलासुर का नाश करने वाले इन्द्र के हित को काटने की सामर्थ्य आप में कहाँ है अर्थात् इन्द्र के हित का विनाश आप नहीं कर सकते।

यहाँ अन्य के वाक्य की अन्यथा योजना करने से वक्रोक्ति अलंकार है। वह भी नारीणां, (हित) कृत्, अबलानां तथा बलाभाव पदों में श्लिष्ट है अतः श्लेष वक्रोक्ति है। वाम पद में अभंग है। वा का अर्थ वितर्क। और अमा का अर्थ साथ है। साथ में जो वितर्क करता है यानी तुम्हारे साथ में रहना अच्छा है कि नहीं ऐसा जो वितर्क करता है वह वाम होता है। अतः वा और अमा दो के भंग तोड़ने से शत्रु अर्थ होता है। और वामा पद का स्त्री अर्थ तो प्रसिद्ध ही है।

अभङ्ग श्लेष से होने वाली वक्रोक्ति जैसे। अहो। अहो आश्चर्य है किसने तुम्हारी बुद्धि को दारुणा बनाई। यहाँ दारुणा पद को प्रथमान्त मानकर कहा जिसका अर्थ है कठोर। किन्तु श्रोता ने उसको दारु शब्द का तृतीयान्त पद माना जिससे उसका अर्थ बदल गया। दारु का अर्थ है लकड़ी। अतः उस वाक्य का अर्थ हुआ किसने तुम्हारी बुद्धि को लकड़ी से बनाया। क्योंकि बुद्धि तो त्रिगुणात्मिका सुनी है। यहाँ दारुणा माने क्रूरा और दारु से ये दोनों अर्थ दारुणा इस एक ही पद से मिल जाते हैं अतः अभङ्ग श्लेष है।

काकु से जैसे—गुरु। गुरुजनों के पराधीन होने से अतीव दूर देश में जाने

अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥ ३५४ ॥

(१०४) वर्णसाम्यमनुप्रासः ।

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

(१०५) छेकवृत्तिगतो द्विधा ।

छेका विदग्धाः । वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः । गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च ।

**मधुसूदनी**

मतिशयो दृश्यते तेन "वर्णसाम्यमनुप्रासः" इति लक्ष्यते । स च छेकवृत्तिलाटानुस्यूतस्त्रिधा । तेष्वेकः लाटानुप्रासो नाम्ना परिगण्यते परं तत्र वर्णसमुदायरूपस्य पदस्य तादृशानां पदानामेव साम्यं न वर्णस्य । छेके वृत्तौ च कथितवर्णत्वरूपं, लाटानुप्रासे एकपदानुगता बहुपदानुगता च पुनःश्रुतिः अर्थानुगता पुनरुक्तिश्चेत्युभयरूपं साम्यं स एव चमत्कारितया अलंकारः । इदमेव साम्यं पदयुगलपादयुगलवाक्ययुगलानुगतं चेत्तर्हि यमकालंकारनाम्ना व्यवह्रियते । यम युगलशब्दौ पर्यायौ । यद्यपि एकस्मिन् पदे कथितपदतायां पदयुगलत्वम्, अनेकेषु तेषु तस्यां सत्यां पादयुगलत्वं वाक्ययुगलत्वं च स्यादेव तेन यमकलाटानुप्रासयोरैक्यं तथापि लाटानुप्रासे अर्थानुगतायाः पुनरुक्तेर्नियतत्वात्तात्पर्यमात्रतो भेद अवश्यमङ्गीकार्यः । यमकालंकारे तु सार्थकनिरर्थकोभयविधशब्दसद्भावात्पुनः

**बालक्रीड़ा**

के लिए उद्यत यह महाशय ! अलिकुल एवं कोकिल से ललित सुरभि समय में नहीं आयेगा । इसके उत्तर में भी सखी इसी वाक्य को दुहरा देती है उसका अर्थ होता है कि अवश्य वसन्त ऋतु में आयेगा ।

यहाँ नहीं आयेगा इस वाक्य को प्रश्नात्मक ध्वनि विकार से बोलने पर क्या नहीं आयेगा अपि तु अवश्य आयेगा ऐसा अर्थ हो जाता है । अतः काकुवक्रोक्ति का यह उदाहरण है ।

ध्वनिगत अलंकार का उदाहरण बतलाकर अब वर्णगत का उदाहरण दिखाते हैं वर्ण । वर्णों की पुनःश्रुति होने पर वर्णों का साम्य होता है जो चमत्कार का आधायक होता है अतः वर्णसाम्य अनुप्रास अलंकार है । इसमें स्वरों का वैसादृश्य है समानता नहीं है केवल व्यञ्जनों का सादृश्य है तब भी उसी को यहाँ वर्णसाम्य मानकर लिखा है । अनुप्रास का अर्थ है रसों के अनुकूल प्रकृष्ट उत्तम न्यास ।

वह अनुप्रास दो प्रकार का है छेकगत एवं वृत्तिगत । छेक माने विदग्ध और वृत्ति माने नियत वर्णों में गत माने रहने वाला रस विषयक व्यापार । अतः छेकानुप्रास और वृत्यनुप्रास ये दो भेद होते हैं । उनका स्वरूप क्या है इस प्रश्न का उत्तर में कहते हैं ।

किन्तयोः स्वरूपमित्याह—

**( १०६ ) सोऽनेकस्य सकृत्पूर्वः ।**

अनेकस्य अर्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः ।

उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ३५५ ॥

**( १०७ ) एकस्याप्यसकृत्परः ॥ ७९ ॥**

एकस्य अपिशब्दादनेकस्य व्यंजनस्य द्विर्बहुकृत्वों वा सादृश्यं वृत्त्यनुप्रासः । तत्र—

**( १०८ ) माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**

**( १०९ ) ओजःप्रकाशकैस्तैस्तु परुषा**

उभयत्रापि प्रागुदाहृतम् ।

**( ११० ) कोमला परैः ॥८०॥**

## मधुसूदनी

श्रुतेः सद्भावेऽपि अर्थानुगतायाः पुनरुक्तेरनियतत्वमेवातः अर्थे सत्यर्थभिन्नानामित्युक्तं ततस्तात्पर्यमात्रतो भेदोऽस्त्येव नहि ।

## बालक्रीड़ा

सोऽनेकस्य । जहाँ अनेक व्यञ्जनों का एक वार साम्य हो वह पहला अर्थात् छेकानुप्रास है । यहाँ मूल में अनेक के माने व्यञ्जनों का और सकृत् के माने एकवार । उसका उदाहरण है ततः । अरुण के उदय हो जाने पर जिसका बिम्ब मन्द पड़जाता है वह चन्द्रमा काम से क्षीण कामिनी के गण्ड के सदृश पाण्डुता को धारण करता है । यहाँ स्पन्द मन्दी में न्द की और गण्ड पाण्डु में ण्ड की एकवार पुनःश्रुति है—जिससे साम्य हो गया है यही छेकानुप्रास का स्वरूप है ।

एक व्यञ्जन का भी असकृत् माने वार २ साम्य होने पर दूसरा वृत्त्यनुप्रास है । एक तथा अपि शब्द से अनेक व्यञ्जन का असकृत् माने दो वार या बहुत वार साम्य वृत्त्यनुप्रास है । वहाँ पर माधुर्य के व्यञ्जक वर्णों वाली वृत्ति उपनागरिका कहलाती है । और ओज के प्रकाशक वर्णों वाली तो परुषा कहलाती है । दोनों के ही उदाहरण पहले बतला दिये हैं । पहली का अनंग रंग इत्यादि दूसरी का मूर्ध्नामुद्वृत्त इत्यादि उदाहरण है । पर माने अवशिष्ट वर्णों वाली कोमला वृत्ति कहलाती है । इसी कोमला को कोई लोग "ग्राम्या" इस नाम से भी कहते हैं । उदाहरण जैसे—, अपसारय । इसकी व्याख्या अष्टम उल्लास में कर दी गई है । यहाँ रेफ और लकार का बहुत वार सादृश्य है अतः वृत्त्यनुप्रास है ।

परैः शेषैः। तामेव केचिद् ग्राम्येति वदन्ति। उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि! मृणालैरिति वदति द्विवानिशं बाला॥ ३५६॥

(१११) केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः।

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भी-गौडी-पाञ्चाल्याख्या रीतयो मताः!

(११२) शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः॥ ८१॥

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् लाटजनवल्लभत्वाच्च लाटानुप्रासः। एष पदानुप्रास इत्यन्ये।

(११३) पदानां सः।

स इति लाटानुप्रासः। उदाहरणम्।

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च संविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥ ३५७॥

(११४) पदस्यापि।

## बालक्रीड़ा

किन्हीं लोगों के मत में ये वैदर्भी प्रमुख रीतियाँ मानी गई हैं। ये तीनों वृत्तियाँ वामन आदि के मत में वैदर्भी गौडी एवं पाञ्चाली रीतियाँ मानी गई है।

अब वर्ण के बाद पद गत एवं वाक्य गत अनुप्रास कहते हैं शाब्दस्तु। जहाँ तात्पर्य मात्र केवल उद्देश्य विधेय भाव से होने वाले अन्वय का भेद हो पार्थक्य हो वह लाटानुप्रास है। यहाँ शाब्द का अर्थ है शब्द में रहने वाला अनुप्रास। शब्द और अर्थ में अभेद रहने पर भी केवल अन्वय के भेद से और लाट देश के निवासी जनों के प्रिय होने से इसका नाम लाटानुप्रास है। और लोग इसको पदानुप्रास कहते हैं। वह अनुप्रास पदों का है यानी पद समूह रूप वाक्य में रहता है। यहाँ स का अर्थ है लाटानुप्रास। उदाहरण जैसे—यस्य न। जिसके पास प्रिया नहीं है उसके लिये चन्द्रमा अग्नि है। और जिसके पास प्रिया है उसके लिए अग्नि भी चन्द्र है। यानी विरह दुःख के समय सुखदायक भी सन्ताप जनक हो जाता है। और संभोग सुख के समय सन्ताप जनक भी सुखमय प्रतीत होता है। यहाँ पूर्वार्ध में तुहिन दीधिति उद्देश्य है और दवदहन विधेय है। तथा उत्तरार्ध में दवदहन उद्देश्य है और तुहिन दीधिति विधेय है।

एक पदगत लाटानुप्रास के द्वितीय भेद को कहते हैं पदस्यापि। पद का भी। यहाँ अपिशब्द लाटानुप्रास के परामर्शक स इस पद का समुच्चय करता है। उदाहरण जैसे—

अपिशब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ३५८ ॥

## मधुसूदनी

अपिशब्देन स इति समुच्चीयते । इति । अटरस्य पटरकरणसदृश-मेतत् । अटनमटः तं राति सोऽटरः वृथाटाट्यां कुर्वाणः । पटादयो धातवो भाषार्थाः । पटं भाषां राति स पटरः बहुवक्ता । एवं च कश्चिदितस्ततो गच्छति किमपि ब्रूते तदर्थं भाषायामाभाणकः अटरस्य पटरं करोति । इति । समुच्चीयते इति कर्मणि प्रत्यये क्रियाऽस्ति ततः अपिशब्देन इति कर्तृपदं तृतीयान्तम् । 'स इति' इति कर्म । कर्त्तरि प्रत्ययेऽस्य प्रयोगो यथा अपिशब्दः स इति पदं समुच्चिनोति । एवं हि अपिशब्दः समुच्चयकर्त्ता इति प्रतिभाति । परं भगवन् ! वाग्देवतावतार ! एवं नहि ! अपिशब्दः समुच्चयार्थक एव न तु समुच्चायकः । समुच्चायकस्तु यस्योत्तरं सोऽपिशब्दः पतति स अपिशब्दाव्यवहितपूर्वः शब्द एव नान्यः । स समुच्चायकोऽपि स्वसदृशंमेव समुच्चतेव्यं न तु विसदृशं समुच्चिनोति । यथा प्राक्—सोऽनेकस्य सकृत्पूर्वं एकस्याप्यसकृत्परः इत्यत्र एकस्य इति पदं स्वोत्तरपतिताऽपिशब्दद्योतितसमुच्चयबलात्पूर्वभागीयानेकपदस्य अर्थभूतं स्वसदृशं व्यञ्जनमेव समुच्चिनोति न तु विसदृशं स इति पदम् । तथैवात्रापि कर्तव्यं परमत्र अपिशब्दः समुच्चयार्थको नास्ति अपि तु युक्तपदार्थार्थकः । अपिः सम्भावनाप्रश्नशंकागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च । इति विश्वः । तेन पदानामित्यनेन युक्तः पदार्थः स इति पदार्थः स एवात्र अपिशब्देन युज्यते इति वाच्यम् । अन्यच्च तात्पर्यमात्रतो भेद इति लाटानुप्रासलक्षणघटकस्य तात्पर्येतिपदस्यार्थः अन्वयः । स चान्वयः पदे संभवितुं नार्हः । यदि पदशब्देनात्र पदार्थो गृह्यते तद्यपि एकस्मिन् पदार्थे आकांक्षाद्यभाव एव इति । तत्कथमेकस्य पदस्य स लाटानुप्रासोऽलंकारः स्यात् । प्रातिपदकस्याऽपि तादृशो लाटानुप्रासः कथं भवितुमर्हः । इति सर्वमसमञ्जसम् ।

## बालक्रीड़ा

वदनम् । उत्तम नायिका का मुख सुधाकर है । हाँ सत्य है । किन्तु सुधाकर कलङ्क से विकल कहाँ हो सकता है । यहाँ पर सुधाकर यह दोनों पादों में एक आनुपूर्वी है इस लिए इसको एक पद मान सकते हैं । वस्तुदस्तु अनेक पद है । क्योंकि एक पद में उद्देश्य विधेयभाव नहीं हो सकता है इस लिए और सकृदुच्चरित शब्द सकृत् ही अर्थ का बोधक होता है अतः जब २ अर्थ को बतलाना होगा तब २ उसका पुनः उच्चारण करना होता है उसका फल है कि प्रत्युच्चारण में शब्द भिन्न हो जाते हैं ( प्रत्यर्थं हि शब्दाभिनिवेशः ) एक वार पहले पाद में विधेय के रूप में दूसरी वार द्वितीय पाद में उद्देश्य के रूप में सुधाकर पद का उच्चारण किया है । अतः अनेक पद हैं ।

